Babu Banarasi Prasad

Jag'adishi Siddhanta lakshmanua

জাগদীশীসিদ্ধান্ত লক্ষণা

Sanskrit-

Paper - Printed

1930 Sambat (145 years old)

16 Folio

14.7" x 5.9"

Complete

१०३३ नं ५५

N° 116
F-16

॥अथजागदीशीसिद्धान्तलक्षणंप्रारभ्यते॥



शि·म ॥श्रीगणेशायनमः॥अथसिद्धांतलक्षणशिरोमणिः॥प्रतियोग्यसमानाधिकरणेति।प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यंताभावप्रतियोगितानवच्छेद

१ कोयोधर्मस्तद्धर्मावच्छिन्नेनयेनकेनापिसमंसामानाधिकरण्यंतद्रूपविशिष्टस्यतद्धर्मावच्छिन्नयावन्निरूपिताव्याप्तिरित्यर्थः दंडादौसाध्येपरम्परासम्बन्धेनदंडत्वादिक

मेवसाध्यतावच्छेदकमतोनाव्याप्तिः इत्थञ्चद्रव्यंगुणकर्मान्यत्वेसतिसत्वादित्यादौसत्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेः नाव्याप्तिः

साधनस्यविशिष्टसत्वादेर्गुणाद्यवृत्तेः सामानाधिकरण्यव्यक्तीनांभेदेऽपिनिरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्यचैक्याद्व्याप्तेरैक्यं वस्तुतस्तुधूमत्वादिविशि

ष्टव्यापकवह्निसामानाधिकरण्यस्यरासभादिसाधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वृत्तिधूमत्वादिकंवाव्याप्तिः आद्याभिन्नाद्वितीयात्वभिन्नैवेति ध्येय

म्। अयंकपिसंयोगीएतद्वृक्षत्वादित्यादिसंग्रहायासमानाधिकरणान्तम्। यत्तुद्रव्यंसंयोगिद्रव्यत्वादित्यत्राव्याप्तिवारणायतत्संयोगस्यशाखाद्यवच्छेदेनवृत्तेर्मूल

त्वावच्छेदेनतत्सामान्याभाववृत्तावविरोधात् तत्रचातीन्द्रियस्पर्शसंयोगस्यसत्त्वोत्पत्तितः प्रतियोग्युपलब्धेर्दोषाद्दूरस्थेनसंयोगित्यादिनाध्यक्षमितितन्नद्रव्येसंयोग

सामान्याभावेमानाभावात् नचयोयदीययावद्विशेषाभाववान् सतत्सामान्याभाववानिति व्याप्तेर्यावत्संयोगाभावाएवमानं यत्तदर्थयोरननुगमात् एकावच्छेदेनयावद्वि

शेषाभाववत्वस्योपाधित्वाच्च एतेनअयंसंयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्वादिति निरस्तं व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च

।नचप्रतियोग्यनवच्छेदकतयैवरूपसत्वादेरभावावच्छेदकत्वंगुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसंगात् यथाच घटपूर्ववर्तित्वस्यप्रतिदंडंवह्निसा

मानाधिकरण्यस्यवाप्रतिधूमभिन्नत्वेऽपिदंडत्वं धूमत्वंवातत्सामान्यस्यावच्छेदकं तथैवसंयोगसामान्यस्यावच्छेदकं द्रव्यत्वादि

कमित्यस्यापिसुवचत्वाच्चेति सम्प्रदायविदः नवीनास्तूत्पत्तिकालावच्छेदेनघटादौगुणस्यप्रलयावच्छेदेनगगनादौसंयोगस्यसामान्याभावोवर्तते तथा धूमवत्यपि विर

होदहनस्यइहपर्वतेनितम्बेहुताशनोनशिखरेइतिप्रतीतेः संयोगेनद्रव्यस्याप्यव्याप्यवृत्तित्वात् वृत्तेरव्याप्यवृत्तित्वेवृत्तिमतोव्याप्यवृत्तित्वस्यात्यन्तमसम्भावित

त्वाच्च एवं प्रतियोगिमतोऽपि कालदेशयोर्देशकालभेदावच्छेदेन तदभावः तथाचतत्तत्साध्यकाव्याप्तिवारणाय तत्तन्नोपादेयञ्चसर्वथैव व्याप्यवृत्तिसाध्यकेसा

ध्यसाधनभेदेनव्याप्तिभेदादितिवदन्ति प्रतियोग्यसामानाधिकरण्यञ्चप्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं तेन अयंगुणकर्मान्यत्वविशिष्टसत्तावान्

जातेः भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौनातिव्याप्तिः नचोभयत्वमेकविशिष्टापरत्वेविशिष्टञ्चकेवलादन्यदितितदभावोमनसिसहजतएवप्रतियोग्यधि राम

करणमितिवाच्यम् उभयत्वस्यहिनविशिष्टत्वादनतिरिक्तत्वेनवातद्वच्छिन्नाभावस्तद्वच्छिन्नाभावात् विशिष्टस्यविरहेऽपिघटत्वपटत्वयोरुभयत्वस्योभयत्वेनतद १

यावद्विशेषा

भावस्यचप्रत्यक्षसिद्धत्वात् नचतत्रव्याप्तिरेवोभयत्वाधिकरणस्यमूर्त्तत्वस्यमनसिसत्वादितिवाच्यं तथात्वेप्युभयत्वेनरूपेणतत्रासत्वात् नात्रोभयमितिप्रतीतेर्दुर्वा
रत्वात् अत्यन्तपदञ्चात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरणस्यअत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभायअन्यथासर्वस्यैवाभावस्यस्वसमाना
धिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वस्वरूपानतिरिक्ततयाप्रतियोग्यसामानाधिकरण्यस्यैव दुर्लभत्वापत्तेः सर्व्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभावत्व
निरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्यस्वभेदस्यप्रतियोगित्वात्भावसाध्यकाव्याप्तेश्चेतिसम्प्रदायविदः अथयत्रगोत्वंतदागोरित्यत्रातिव्याप्तिःप्रलय
स्यगोध्वंसवत्त्वेनगवात्यन्ताभावानधिकरणत्वात् संसर्गाभावमात्रोक्तावपियदास्पन्दस्तदाद्व्यणुकंयद्वाअदृष्टंतदाजन्यज्ञानंदुःखंवायदानस्यादृष्टंतदातदीयंज्ञानमि
त्यादावति व्याप्तिः द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वात् नहितयोःसामान्याभावत्ववादिमतेऽपि एकविशेष
प्रागभावविशेषान्तरध्वंसवत्यपिसमयेसामान्यावच्छिन्नध्वंसप्रागभावयोःसंभवइतिचेन्नप्रतियोगिमतद्ध्वंसादिमतोऽपिकालस्यात्यन्ताभाववत्त्वेऽविरोधात्अ
न्यथाअत्यन्ताभावस्यकालमात्रावृत्तित्वप्रसंगात् दूयास्तुविशेषोयदेकस्यदेशभेदावच्छिन्नं तथात्वमपरस्यतुस्वरूपावच्छिन्नमितिदेशे कालस्यैवकालेऽपिदेशस्या
वच्छेदकत्वात् तच्छून्येचकालेतद्भावस्यप्रतियोगिव्यधिकरणत्वात् नचसंसर्गाभावविशेषोऽत्यन्ताभावः संसर्गाभावत्वञ्चसंसर्गारोपजन्यप्रतीतिविषयाभावत्व
रूपं जन्यताघटकनियमघटितमितिवाच्यम् तद्वदन्यावृत्तित्वरूपनियमस्य तत्रघटकत्वात् एवंनियमान्तरस्यात्रप्रवेशेऽपिनक्षतिरि[illegible]हुःवक्ष्यतेचनियमाघटितमे
वसंसर्गाभावादिलक्षणम् अनुपदमेवचविवेचयिष्यते संसर्गाभावत्वप्रवेशेप्रयोजनविरहोऽव्याप्तिश्च। अथज्ञानवान् द्रव्यत्वात् विशेषगुणवान् मनोऽन्यद्रव्यत्वात् जाति
मान् भावत्वादित्यादौसमवायेनज्ञानादेःसाध्यतायामतिव्याप्तिः साध्यशून्यानामपि हेतुमतांविषयत्वविशेषणत्वैकार्थसमवायैःसाध्यवत्वादितिचेन्नैवम् प्रतियोगिताव
च्छेदकसम्बन्धेनप्रतियोगिनोयदधिकरणंसम्बन्धिवातद्वृत्तित्वाभावस्योक्तत्वात् भवति चैवमन्योन्याभावोऽपिप्रतियोग्यसमानाधिकरणः तद्विशिष्टस्यचहेत्वधिकरण
वृत्तित्वं वाच्यं तेननाव्याप्यवृत्तिसाध्यकासंग्रहः तद्वृत्तिभिन्नत्वन्तुनार्थः अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसंगात्। अत्रसामानाधिकरण्यवतोनतदभाववत्त्वप्रती
तेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणंवक्ष्यति तच्चहेत्वधिकरणेबोध्यंप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावा
न्तार्थनिष्कर्षः। ननुप्रतियोगितावच्छेदकावच्छिन्नस्ययस्यकस्यचित्तत्सामान्यस्यप्रतियोगितावच्छेदकयत्किंचिदवच्छिन्नस्यवा अनधिकरणमुक्तम् आद्येअव्याप्य
वृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् द्वितीयेसंयोगसामान्याभाववान् द्रव्यत्वाभाववान्वासत्वादित्यादावतिव्याप्तिःसा

शि·म· ध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्त्वात् नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च स्वाभावाभावात्मकस्य विशिष्टस्यापि
२ द्रव्यत्वस्य द्रव्यत्वानतिरेकात् तृतीयेऽकपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियोगितावच्छेद
कगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् मैवम् यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तदनवच्छेदकत्वस्योक्तत्वात् । अत्र च यत्र स्वसामा
नाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र वर्तमानत्वमभावस्य साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नाया स्वप्रतियोगि
ताया अनवच्छेदकत्वं बोध्यं तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगिताया धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदक
त्वेऽपि वह्नित्वस्य न क्षतिः । यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुमतो वक्तव्यम् । तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया एवं स्थिते सा
मानाधिकरण्याद्यौ सम्बन्धित्वं निवेशनीयं न त्वधिकरणत्वं तथा च धर्म्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्व्वहति तथा हि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महान
से वर्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवत
स्तादात्म्येन सम्बन्धित्वं एवं धर्मिणो धर्म्मव्याप्यत्वव्यापकत्वे बोध्ये अत एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते । यथा च यादृशेन सम्बन्धेन हेतो
र्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोर्विशिष्टानुमितिः तेन न धूमाव
यवे संयोगेन न वा समवायेन पर्व्वते वह्निधीः तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यती
ति कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्तते निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे
संयोगेनेति नियमउपपद्यते तथा च तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेषामभावः सिध्यति स एव चान्योन्याभावः । इत्थमेव च
तादात्म्याद्वृक्षशिंशपयोर्व्याप्तिनिश्चय इति सङ्गच्छते अत एव गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोव्यापकत्वग्रहे सास्नादिना तादात्म्येन गोः तादात्म्येन
गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यति एवं च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वं वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छे
दकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् सिद्धिरपि तस्य तथैव न तु वृत्तिनियामकसं राम·
म्बन्धेन तेनासम्बन्धित्वात् व्यापकत्वाच्च व्यक्तीभविष्यति चैतदुपरिष्टात् । नन्वेवं द्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषेणाव्याप्यवृत्ति किमपि व्या २

पक्षेनस्यात् स्वावच्छेदकसम्बन्धेनप्रतियोगिनोःसम्बन्धिनि कालेवर्तमानस्याभावस्यप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेनसम्बन्धेन यत् प्रतियोगिसम्बन्धितदन्यत्वस्यच कालेःसंभवात्। नचतादृशसम्बन्धेनहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यं तथाचवृत्तिगगनाःद्यभावघटितैव तत्सिद्धिः सत्ताद्यधिकरणकर्म्मादौसमवायेन ज्ञानसामान्यस्यसंयोगसामान्यस्यचावृत्तेर्नातिप्रसंगः भूतत्वमूर्त्तत्वोभयत्वविशिष्टगुणकर्म्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तुनमनोगुणादिवृत्तिसंयोगसामान्यन्तुन किंचिद्द्व्यावृत्तीतिवाच्यं विशिष्टस्यानतिरिक्तत्वात् समवायेनजातेःसाध्यत्वेमेयत्वादावतिव्याप्तिःज्ञानिमन्निष्ठतादृशाभावप्रतियोगिताया जातित्वेनानवच्छेदात् जातिशून्येचतादृशसम्बन्धेनवृत्तेरप्रसिद्धेः संयोगादिसाध्यकगुणकर्मान्यत्वादौचातिव्याप्तिः अद्रव्ये हेतुमति तादृशसम्बन्धेनवृत्तेरप्रसिद्धेः द्रव्येचसंयोगादेरपिवृत्तेःसैवम् साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्यविवक्षितत्वात्। धूमसंयोगेवन्ह्यधिकरणायोगोलकानुयोगित्वस्यचैत्रान्यत्वविशिष्टेतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्म्मान्यत्वविशिष्टसत्तासमवायेचजात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसंगः स्वरूपसम्बन्धेनगगनादेर्वृत्तिमत्त्वन्तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्येयत् सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नत्वोभयाभावस्तेनसम्बन्धेन तद्धर्म्मावच्छिन्नस्यव्यापकत्वबोध्यम्। समवायसम्बन्धेनमेयसामान्याभावस्यसामान्यादौसत्वान्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वंसुलभम्। अतएवसमवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगित्वोभयसत्वेऽपि द्रव्यंजातेरित्यादौवन्हिधूमोभयवान् वन्हेरित्यादौसंयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपिचनातिव्याप्तिरित्यपिवदन्ति। प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषोनसम्बन्धत्वेननिविष्टः सामानाधिकरण्येऽपिसम्बन्धः संयोगत्वादिनैवनिविशते दर्शितञ्चनियमाघटितमपिसम्बन्धत्वम्। अभावत्वञ्चेदमिहनास्तीदमिदंनभवतीतिप्रतीतिनियामकोभावाभावसाधारणः स्वरूपसम्बन्धविशेषः अतोनाभावसाध्यकव्यभिचारिण्यतिप्रसंगः तदपिवानोपादेयं प्रयोजनविरहात्प्रतियोगित्वाधिकरणत्वतत्वसम्बन्धत्वादयोप्यतिरिक्ताएवपदार्था इत्येकदेशिनः॥ ॥ ॥इतिशिरोमणिः॥

॥अथसिद्धांतलक्षणम्॥ ॥श्रीगणेशाय नमः॥ वन्हित्वावच्छिन्नस्यसर्वस्यैव धूमादिमन्निष्ठाःभावप्रतियोगितावच्छेदकीभूततद्व्यक्तित्वाद्यवच्छिन्नत्वादव्याप्तिरित्यन्यथाव्याचष्टे प्रतियोगितानवच्छेदकोयोधर्म इति तथाच प्रतियोगितावच्छेदकेसस्यभावप्रधाननिर्देशतयाऽवच्छिन्नपदस्यावच्छिन्नप्रतियोगिताकपरतया तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नत्वं लभ्यतेइति मूलेनावच्छिन्नपदवैयर्थ्यमितिध्येयम्। यद्यपि महानसीयवन्हिर्नास्तीत्यादिप्रतीतिसिद्धस्यहेतुमन्निष्ठाभावस्यप्रतियोगितावच्छेदकमेववन्हित्वमित्यव्याप्तितादवस्थ्यम् नचतादृशपर्याप्त्यधिकरणत्वं नवन्हित्व

उक्त पर्वते

भिन्नत्वं

त्वप्रतियोगिकसमवायेन) साध्यतावच्छेदकविशिष्टप्रतियोगिताक

शिम स्येत्यदोषः प्रत्येकमुभयपर्याप्तिसम्बन्धेनाऽसतोवच्छेदकत्वस्योभयत्रपर्याप्तिसम्बन्धेनसत्वायोगात् तथापिसाध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नायाएवप्रतियो
३ गितायाअनवच्छेदकस्यैवविवक्षितत्वाददोषः नचप्रमेयोग्नियवान् धूमादित्यादावव्याप्तिः साध्यतावच्छेदकेतरस्याप्रसिद्धेरितिवाच्यं तदितरपदेनस्वावच्छिन्नप्रकारता
वच्छेदकस्यविवक्षितत्वात् साध्यतावच्छेदकभिन्नोयः साध्यनिष्ठोधर्मस्तदनवच्छेद्यप्रतियोगितातुननिवेश्यातथासतितादृशप्रतियोगिताशून्यसाध्यसामानाधिक
रण्यस्यैवव्याप्तित्वसंभवेसाध्यतावच्छेदकस्यतादृशप्रतियोगितानवच्छेदकत्वानुसरणवैयर्थ्यापत्तेरितिध्येयम्।अपिचप्रमेयवान्वाच्यत्वादित्यादावव्याप्तिः तथाहिसा
ध्यतावच्छेदकातिरिक्तंसाध्यवृत्तियद्द्रव्यत्वादिकंतदनवच्छेद्यप्रतियोगिताकस्यहेतुसमानाधिकरणाभावस्याप्रसिद्धेरितितुनव्याः॥ द्रव्यत्वादिरूपेणधूमेवह्निव्याप्य
त्वस्यधूमसामान्येबाततद्वह्निव्याप्यत्वस्यवारणार्थेविशेष्यलक्ष्यंनिर्दिशति तद्रूपविशिष्टस्येत्यादिना तद्रूपावच्छिन्नहेतुकतादृशधर्मावच्छिन्नविधेयकानुमितेजे
नकतायाविषयविधयावच्छेदिकाइतितदर्थः तेनव्याप्तिपदेनतादृशसामानाधिकरण्योक्तौनपौनरुक्त्यं व्याप्तेःसामान्यरूपतालाभायपावदिति ननुदण्डिमान्दण्डिसं
योगादित्यत्राव्याप्तिः चालनीन्यायेनदण्डमात्रस्यैवप्रतियोगितावच्छेदकत्वात् नचशुद्धसाध्यतावच्छेदकस्थलेप्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वंनिर
वच्छिन्नमिवविशिष्टसाध्यतावच्छेदकस्थलेयेनरूपेणसाध्यतावच्छेदकत्वंतत्तदितरोभयानवच्छिन्नप्रतियोगितावच्छेदकत्वंग्राह्यम् अन्यथापर्वतेमहानसीय
वह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यादिप्रतीत्याविशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकतयावह्निमान्धूमादित्यादौविवजातिमत्वान्घटत्वादित्यादावव
व्याप्तिप्रसंगाच्च घटेपटसमवेतत्वविशिष्टजातिमान्नास्तीत्यादिप्रतीत्याविशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकत्वात् तथाचतद्दण्डवान्नास्तीतिप्रतीत्यातत्ता
विशिष्टदण्डव्यक्तेरेवावच्छेदकत्वावगाहनात्शुद्धदण्डव्यक्तीनांदण्डत्वतदितरोभयानवच्छिन्नत्वंयद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वंतदभावसत्वान्नाव्या
प्तिरितिवाच्यंप्रमेयदण्डवान्नास्तीत्यादौप्रमेयत्वोपलक्षितस्यैवतद्दण्डवान्नास्तीत्यादावपितत्वोपलक्षितदण्डमात्रस्यैवावच्छेदकत्वकल्पनात् केवलस्यावच्छेदक
त्वासंभवएवविशिष्टस्यतथात्वस्वीकारात् अन्यथाप्रमेयत्वविशिष्टदंडादेरपितथात्वापत्तेरत आह दण्ड्यादाविति हेतुमतिदंडसामान्याभावसत्वात् दंडत्वमपि
तादृशावच्छेदकमेवेत्यतउक्तं परम्परासम्बद्धमिति तथाचस्वाश्रयवत्वरूपपरम्परासम्बन्धेनदंडत्ववतोदण्डिनःसाधनवत्यभावविरहान्नाव्याप्तिः साध्यताव
च्छेदकताघटकसम्बन्धावच्छिन्नायाएवहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाःप्रविष्टत्वात् अन्यथाविषयितयारूपत्वादिमतोज्ञानस्यसमवायेनाभावस्यहे राम
तुमतिसत्वाद्रूपवान्पृथिवीत्वादित्यादावव्याप्तिप्रसंगादितिभावः यदिचशुद्धदंडव्यक्तेरवच्छेदकत्वावगाहिप्रत्ययान्तरसत्वात्तद्दंडीनास्तीतिप्रतीत्यात्तत्ताविशिष्ट ३

(रूपेत्ववत्वात्पृथिवीत्वात्" अथवासमवायसंबंधातिरिक्त संबंधेनोत्पन्नस्यजातेःस्वरूपतोज्ञानं। तत्ताविनिर्मुक्त

०साध्यतावछेदकताघटकसंबंधावछिन्नत्वपदेन साध्यतावछेदकनिष्ठत्वा। साध्यतावछेदकताघटकसंबधातिरिक्तसंबंधावछिन्नत्वो ज्ञयाभावो ग्राह्यः।
अथ वा साध्यतावछेदके साध्यतावछेदकताघटकसंबंधावछिन्नावछेदकत्वीयस्वरूपसंबधावछिन्नाभावो ग्राह्यः॥

दंडव्यक्तेरेवावच्छेदकत्वं युक्तं दंडी नास्तीतिप्रतीत्यन्यथानुपपत्त्या दंडस्यावच्छेदकत्वसिद्धौ प्रमेयदंडवान्नास्तीत्यादेरपि तन्मात्रावच्छेदकत्वेनैवसामंजस्ये विशिष्टस्यत
दवच्छेदकत्वाकल्पनात् तथा चैकरूपमुक्ता व्याप्तिरिष्यते तद्रूपत्वन्यूनवृत्तिजातिमत्त्वात् रूपादित्यादावव्याप्तिः सर्वस्याएव नीलत्वपीतत्वादिरूपा या रूपत्वन्यून
वृत्तिजातेः साधनवन्निष्ठाभावप्रतियोगिताया निरवच्छिन्नावच्छेदकत्वात् रूपवति नीलो नास्तीत्यादिप्रत्ययादित्याशयेन दंड्यादावित्यादिपदमुपात्तम् तथा च तत्रापि स्व
न्यूनजात्याश्रयत्वसम्बन्धेन रूपत्वमेव साध्यतावच्छेदकमिति भावः साध्यतावच्छेदकमिति अनुमितिविधेयतावच्छेदकमित्यर्थः तथा चोक्तव्याप्तिज्ञानाद्दंडांशे दंड
त्वप्रकारिका दंडत्ववत्वानित्येवानुमितिः न तु दंडिमानिति दंडप्रकारिकापि तस्य व्यापकतावच्छेदकत्वेनाग्रहात् कारणबोधेन तदवच्छिन्नविधेयताकानुमित्यसंभवादि
तिभावः वस्तुतो दंडत्वस्य साध्यतावच्छेदकत्वे दंडिमानित्यनुमितिर्न स्यात् दंडानां व्यापकतानवच्छेदकत्वादित्यस्वरसादेव दंडत्वादिकमित्यत्रादिपदमुपात्तम् तेन त
त्तद्दंडव्यक्तीनामेव स्ववृत्तिदंडत्वावच्छिन्नवत्तालक्षणपरंपरासम्बन्धेन साध्यतावच्छेदकत्वलाभात् दंडिमानित्यनुमितेर्नानुपपत्तिलेशोपीति ध्येयम् केचित्तु साध्य
साधनभेदेन व्याप्तिग्रहानुमित्योः कार्यकारणभावभेदात् यत्र दंडत्वादिविशिष्टं साध्यतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्मस्तद्विशि
ष्टावच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिस्तद्विशिष्टावच्छिन्नविधेयकानुमितिप्रयोजिका एवं यत्र परम्परया दंडत्वादिकमेवानुमितौ विधेयतावच्छेदकं तत्र हेतुमन्नि
ष्ठाभावप्रतियोगितानवच्छेदको यो धर्मः परम्परया तदवच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिः प्रयोजकेति सामानाधिकरण्यांशे दंडादेः प्रवेशाप्रवेशकृत एव दंडि
मान् दंडत्ववत्वानित्यनुमित्योर्दंडादिविषयत्वनियमइत्याहुः यत्तु दंडत्वधर्मिकनिरुक्तानवच्छेदकत्वज्ञानस्यैव कार्यतावच्छेदकं दंडावच्छिन्नविधेयताकानुमितित्व
मित्यनुमितौ दंडप्रकारकत्वं नानुपपन्नमिति। तत्तुच्छम् परम्परया दंडत्वावच्छिन्नविधेयकानुमितित्वस्यापि तादृशज्ञानकार्यतावच्छेदकतया सर्वत्र दंडिमान् दंडत्वव
त्वानित्युभयाकारानुमित्यापत्तेरुभयधर्मावच्छिन्नस्यैव सामग्रीसंभवादितिदिक् अपरे तु नोक्तव्याप्तिज्ञानं दंडिमान् दंडिसंयोगादित्याद्यनुमितौ हेतुः किंतु वस्यमा
णान्योन्याभावघटितव्याप्तिज्ञानं अत एव यथा यथमित्यादिग्रंथोपि संगच्छते इत्याहुः नव्यास्तु दंडिमानित्यादौ न संयोगेन दंड्यादेः प्रकारत्वं किंतु स्ववृत्तिपुरुषत्वावच्छिन्ना
धिकरणत्वसंबन्धेन न चैवमनुभवानुपलापापत्तिः दीधितिकृन्मतेपि दंडस्य साध्यतावच्छेदकधर्मविधयासंयोगस्य साध्यतावच्छेदकताघटकसंसर्गविधयावगाहि
तापलापापत्तिरितिप्राहुः यद्रूपविशिष्टे यस्य फलमाह इत्थं चेति चोवधारणे दूसादौ इत्यादिन्यायस्थ्यलीयहेतौ तथा च न्यायः पक्षनिर्देशं विना नास्त्यत इह पदेन त
न्निर्देशः एवमग्रेपि यत्तु द्रव्ये धर्मिणि तादात्म्येन गुणकर्मणोः साध्यताभ्रमं निरसितुं इदमिति पक्षनिर्देशस्तन्मन्दं एवमपि इदंत्वविशिष्टद्रव्ये गुणकर्मणोः साध्यता

+साध्यतावछेदकसंबंधावछिन्नाधिकरणत्वीयस्वरूपसंबंधेन या हृन्नप्रतियोगितावछेदकावछिन्ना
धिकरणत्वसामान्याभाववत्वे इत्युमत इति विलक्षणता-४

नात्रये　　　　　　तीयत्व

भ्रमस्यानिरासादिति गुणादावद्वृत्तेरिति गुणादावभावादित्यर्थः तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भावः यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्त
द्धर्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रतीत्युपपत्तौ धूमत्वावच्छिन्नाधिकरणतायां मानाभावात् वन्हिमान्धूमादित्यादावव्याप्तिः हेतुतावच्छे
दकीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः तथापि हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोधिकरणतावच्छेदकत्वस्य च
द्वयोर्व्यतिरेकस्तथाविधहेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितं वन्हिमान् धूमादित्यादौ च तादृशहेत्वधिकरणं धूमस्याधिकरण
मात्रं द्रव्यं विशिष्टसत्वादित्यादौ च तादृशं हेत्वधिकरणं द्रव्यमेव न तु गुणादिः विशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोधिकरणतावच्छेदकत्वस्य च द्वयोः स
त्वादिति ध्येयम् साधनभेदेन व्याप्तिभेदात् यत्र साधनतावच्छेदकं नाधिकरणतावच्छेदकं तत्र तदाश्रयसमानाधिकरणत्वमेव निवेश्यमित्यपि वदंति ननु सामानाधिकरण्यस्य व्या
प्तित्वे तस्य धूमं प्रति भिन्नत्वे धूमसामान्ये वन्हिसामान्यस्यैका व्याप्तिरिति व्यवहारोनुपपन्नः इत्यत आह सामानाधिकरण्येति तथा च वन्हित्वधूमत्वाद्यनुगमादेव तत्र व्याप्तैक्य
व्यवहारो न तु वस्तुगत्यापि व्याप्तेरैक्यमिति भावः नन्वेवं सामान्यलक्षणाः स्वीकारे महानसीयवन्हिसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्वात् पर्वतीयव
न्हिसामानाधिकरण्यस्य च प्रागननुभवात् कुतः परामर्श इत्याशंकायामेकैव हि सा व्याप्तिरिति परामर्शसिद्धांतग्रंथो संगत इत्यत आह वस्तुतस्त्विति रासभादीति तथा च धूम
व्यापकवन्हिसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति भावः न च धूमादिव्यापकवन्हिसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धू
मादिलिंगकानुमितौ हेतुत्वादुक्तव्याप्तेरासभादिसाधारण्येपि न क्षतिरिति वाच्यं पक्षधर्मांशे विषयितयानुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र नि
वेशे तद्घटितस्यैव व्याप्तित्वादिति भावः धूमत्वादिमतीति तथा च तस्येति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्राप्यन्वितमिति भावः ननु साधननिष्ठसामानाधिकरण्यस्य व्या
प्तित्वे एकैव हीति ग्रंथानुपपत्तिस्तदवस्थैव तथा विशिष्टसत्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्वस्य गुणादौ परामर्शाद्गुणेपि द्रव्यत्वानुमितेः प्रमात्वस्याद
त आह तद्वतीति तादृशसामानाधिकरण्यवतीत्यर्थः तथा च तादृशसामानाधिकरण्यविशिष्टं धूमत्वं व्याप्तिस्तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुस्तत्र च नीलघटत्व
प्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन सतो गौरवमिति भावः आद्येति तथा च तासु पादायैव पर्वतीयवन्हिधूमयोः संनिकर्षात्तयोः कथं व्याप्ति
ग्रह इति परामर्शीयपूर्वपक्षग्रंथ इति भावः द्वितीयेति तथा च नाममभिप्रेत्यैव एकैव हि सा व्याप्तिरिति परामर्शीयसिद्धान्तग्रंथ इति भावः यत्रैकमेव साध्याधिकरणं तत्रैव त　राम॰
द्रूपवान् तद्वत्सादित्यादावव्याप्तिरपि अभिन्नैव यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमत्ता हेतुत्वं तत्र हेतुतावच्छेदकीभूतानां नीलत्वादिजातीनां नानात्वे न द्वितीयापि॰　४

वन्हिमा न्धूमात् २ाद्रव्यं वि शिष्टसत्वात् १

+२

क्वचिद्विन्नैवेतिमन्तव्यं कपिसंयोगिन्येतत्सदर्थस्यसाध्यताभ्रमखण्डनार्थमयमितिपक्षनिर्देशः सांप्रदायिकमते संयोगसामान्याभावमात्रस्य द्रव्येऽभावात् कपीतिवृक्ष
मात्रेकपिसंयोगाभावादेतदिति नचाभावेहेतुसामानाधिकरण्यस्यैवहेत्वधिकरणेनिरवच्छिन्नवृत्तित्वरूपस्यनिवेशादुक्ताव्याप्त्युद्धारसंभवात् प्रतियोगिव्यधिकर
णत्वनिवेशोमूलकृतामनुचितइतिवाच्यम् अग्रेसमाधास्यमानत्वादितिभावः तदसमानाधिकरणात् ननुशाखामूलादिसर्वावयवावच्छेदेनसर्वत्रद्रव्येगगनादि
संयोगस्यसत्वात्कुतस्तत् सामान्याभावस्यद्रव्येसंभवइत्यतआह संयोगस्येति वृक्षत्वेतिशाखाद्यवच्छेदेनतत्तत्संयोगसत्वेपिवृक्षत्वावच्छेदेनकस्यचिदपिसंयोगव्य
क्तेरसत्वात्तदवच्छेदेनैवसंयोगसामान्याभावसंभवोऽवच्छेदकभेदेनैकत्रभावाभावयोः समावेशादितिभावः ननुवृक्षेसंयोगसामान्याभावस्यकुतोनाध्यक्षमित्यतआह
तत्रचेति तत्रसंयोगसामान्याभावेसत्वादित्यस्यप्रतियोगितासम्बन्धेनेत्यादि तथाचसंयोगसामान्याभावस्यायोग्यप्रतियोगिकत्वान्नाध्यक्षमिति ननुप्रतियोगिता
वच्छेदकविशिष्टयत्किंचित्प्रतियोगिनोयोग्यत्वं अत्यन्ताभावग्रहेतंत्रंनतुयोग्यमात्रप्रतियोगिकत्वं अन्यथागुणेपिसंयोगसामान्याभावस्यतादृशप्रत्यक्षंनस्या
दित्याहपरितइतिपरितः सर्वावयवावच्छेदेनप्रतियोगिग्रहात्मकदोषाहइत्यर्थः नचैवमपिप्रतियोगिग्रहोत्पत्तिदशायांप्रत्यक्षंदुर्वारं प्रतियोग्युपलंभकसामग्र्याःपि
दोषत्वाभ्युपगमात् प्रतियोगिनउपलब्धिर्यद्युत्पत्स्यतातस्याएवप्रसक्तत्वादितिभावः प्रतियोग्युपलब्धिदोषाभावस्यसंयोगसामान्याभावप्रत्यक्षकार्येसहभावेनहेतु
त्वोपगमान्नोक्तदोषइत्यपिवदंति नचेतिमानमितिपरेणान्वयः योयदीयेति योयज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबंधावच्छिन्नप्रतियोगिताक
यावदभाववान् सतज्जात्यवच्छिन्नतत्संबंधावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः तेननस्वरूपासिद्धिर्नवासिद्धसाधनंजात्युपादानात् गुरुधर्मस्यप्रतियोगि
तावच्छेदकत्वेपितदवच्छिन्नाभावाप्रसिद्ध्यापिनव्यभिचारः नचसत्वगुणत्वाद्यवच्छिन्नाभावमादायस्वरूपासिद्धेर्वारकस्योभयावृत्तिपदस्यवैयर्थ्यम् व्यभिचारवा
रकस्यैवासिद्धिवारकस्यापिविशेषणसार्थकतायाः पक्षधरमिश्रादिसंमतत्वात् अतएवनित्यत्वसाध्यकानुमानेसामान्यवत्वेसतिविशेषगुणान्तरासमानाधिकरणै
कमात्रवृत्तिगुणत्वहेतौशब्देतरार्थकस्यान्तरपदस्यशब्दमण्यालोकेसार्थकत्वं तैः समर्थितम् यद्वायदीयानांयद्धर्मावच्छिन्नप्रतियोगित्वानांयावतांविशेषाभाव
वान् प्रत्येकावच्छिन्नप्रतियोगिताकानांवाऽभाववान्यः सतद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः तथाचसंयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनांप्रत्येका
वच्छिन्नाभावकूटवत्वस्यपक्षेसत्वान्नासिद्धिर्नवान्यथैविशेषणत्वमितिध्येयम् योयद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान् सतद्धर्मावच्छिन्नाभाववानित्य
र्थस्तत्संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्यघटावृत्तिसंयोगत्वादिवृक्षान्यासमवेतत्वाद्यवच्छिन्नाभावस्ययावदन्तर्गतस्यवृक्षादौपक्षेस्वरूपासिद्धि

भा + स्वनिष्ठावप्रतियोगितावच्छेदकत्व
संबंधेन

परंपरयासंसर्गत्वस्वीकारादाह ( ○ स्वसमानाधिकरणोन्नयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटव्यापकाभावप्रतियोगितावच्छेदकत्वरूप

जा०सि० त्वादनुपादेयः संयोगयावद्विशेषाभावादिति नचसर्वावयवावच्छेदेन वृक्षे गगनादेरेकस्य एवसंयोगो लाघवादिति तस्यैवाभावविरहात्संयोगयावद्विशेषाभाववत्त्वपक्षे
स्वरूपासिद्धिमिति वाच्यम् अतिप्रसंगभंगापत्त्याशाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगप्रति तत्तदवयववृत्त्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोग
स्यासंभवादिति भावः प्राचां मते यत्तद्वयोरनुगमादाह एकावच्छेदेनेति इदमुपाधेः साधनाव्यापकत्वरक्षायै नचैवं तत्तत्संयोगाभावस्य गुणेऽव्याप्यवृत्तित्वादेकावच्छि
न्नत्वेन साध्यव्यापकत्वं दुर्घटं व्याप्यवृत्तेरवच्छेदकत्वानंगीकारादिति वाच्यम् एकावच्छेदेनेत्यनेन निरवच्छिन्नवृत्तिकत्वविशिष्टस्य विवक्षितत्वात् नचतथापि कपिसं
योगसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यम् जात्यवच्छिन्नाभावस्यैवोक्त
व्याप्तौ साध्यविधयाप्रवेशात् कपिसंयोगाभावस्य चातथात्वेन तत्प्रतितदीययावद्विशेषाभावस्योक्तरूपेणाव्यापकत्वेपि क्षत्यभावात् नचाभिघातादिसामान्याभाव
स्य वृक्षे सत्त्वात् तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टस्य यावद्विशेषाभावस्यासत्त्वादेवमुपाधेः साध्याव्यापकत्वमिति वाच्यम् गुणविभाजकजातेरेव हेतुसाध्ययोः प्र
वेशात् केचित्तु एकावच्छेदेनेत्यस्यावच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासम्बन्धेनाभाववत्त्वेनेत्यर्थः तथा च तद्विशिष्टयावद्विशेषाभा
ववत्त्वमुपाधिरित्याहुस्तच्चिन्त्यम् यत्त्वेकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टस्यार्थमाहुस्तन्न व्याप्यवृत्तिरूपादीनां विशेषाभावस्याव
च्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसंभवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति दिक् यत्तद्भ्यां विनाकृतमननुगतानुमानमाशंक्य निषेधति एतेनेति वक्ष्य
माणदोषेणेत्यर्थः व्यर्थेति संयोगसामान्याभावस्य त्वन्मते केवलान्वयितया तत्साध्यतायामभाववत्त्वादिरूपस्यैव सम्यक्त्वादिति भावः अथास्त्वभाववत्त्वादिति तर्हि
हेतुस्तत्र आह अप्रयोजकत्वादिति ननु निरुपाधिकत्वमेव प्रयोजकमत आह निर्गुणत्वादेरिति आदिना द्रव्यभिन्नत्वादेरुपग्रहः अत्र यद्यपि निर्गुणत्वोपाधेः स्वा
भावेन साध्याभावोन्नायकतया न दोषत्वं संयोगस्यैव साध्याभावतया प्रसादोत्तस्येष्टत्वात् नापि व्यभिचारोन्नायकतया तत एव तथापि स्वव्याप्यत्वेन साध्यस्य पक्षाव
त्तित्वोन्नायकतया दूषकत्वं बोध्यम् संयोगसामान्याभावो न वृक्षवृत्तिः निर्गुणत्वव्याप्यत्वादित्यनुमानेनापि वृक्षः संयोगसामान्याभाववान् इत्यनुमितेः प्रतिरोधादिति
ध्येयम् ननु योयद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति व्याप्त्यैव वृक्षत्वादेः संयोगसामान्याभावावच्छेदकत्वं सेत्स्यतीत्याशंक्य निराचष्टे नचेति गुणा
दीति तथा च व्यभिचारान्नोक्तव्याप्तिरिति भावः ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादिति विशिष्यैव व्याप्तिर्वाच्या प्रमेयत्वस राम
त्वादेः पक्षसमत्वादतः स्वरूपासिद्धिमाह यथा चेति प्रतिदण्डमिति भिन्नत्वेपीति परेणान्वयः नन्वव्यवहितपूर्ववर्त्तिताया अवच्छेदकं न दण्डत्वमतिप्रसंगात् किंत ५

व्यवहितपूर्ववर्त्तिजातीयताया: साचाभिन्नाअतःसंयोगस्थलएवानुरूपंदृष्टांतमाह वन्हीतितत्सामान्यस्येति घटपूर्ववर्त्तित्वसामान्यस्यवन्हिसामानाधिकरण्यसामा
न्यस्यचेत्यर्थः केचित्तुकथितव्याप्त्यावप्रयोजकत्वमन्यथातदभावानवच्छेदकत्वहेतुनातदवच्छेदकत्वमेवकुतोनवृक्षत्वादेःसाध्यतेवृक्षत्वाद्यवच्छेदेनतत्संयोगव्य
क्तीनामसत्वेपिसंयोगसामान्यस्यसंभवादित्यभिप्रायकोयंग्रंथइत्याहुः गुणस्येतिसामान्याभावइतिपरेणान्वयः नन्वाद्यक्षणेगुणोनास्तीतिप्रत्ययस्यसंभवेसन्नि
कर्षाद्यभावात् प्रथमक्षणेघटेगुणोनास्तीत्यादिव्यवहारादिकंचसंदिग्धप्रामाण्यकमतः स्थलान्तरमाह प्रलयावच्छेदेनेति तदानींजन्यभावसत्वेप्रलयएवन्याहन्ये
ततिभावः ननुमहाप्रलयेमानाभावात्तदवच्छेदेनेत्ययुक्तमतआह तथेतिअनूक्तप्रतीतिः पर्वतवृत्तिजनोनावच्छेदकत्वोभावशिखरेशिखरावच्छिन्नपर्वतवृत्तित्वा
भावंवाहुताशनेवगाहते ननुपर्वतएवहुताशनाभावमितियदिब्रूयात्तदाप्याह वृत्तेरिति वृत्तेःसंबन्धस्यवृत्तिमतःसम्बन्धवतः तथाचयोयदवच्छेदेनयदीयतत्सं
बधाभाववान्सतदवच्छेदेनतत्सम्बन्धावच्छिन्नतदभाववानितिव्याप्त्यापिशिखरावच्छेदेनसंयोगसम्बन्धावच्छिन्नवन्ह्यभावसिद्धिरितिभावः ननूक्तव्याप्तावप्र
योजकत्वंअन्यथातुल्यन्यायेनयोयदीयपत्संबन्धवान्सतत्सम्बन्धेनतद्वानितिव्याप्त्यापिकुंडादिसंयोगिनोवदरादेःसंयोगेनकुंडादिमत्तापत्तेरित्यरुक्ताबाह एवं
मितिभेदेविशेषःघटवत्यपिकालेइदानींतंतौनघटइतिप्रतीत्यातत्वावच्छेदेनैवतत्कालेघटाभावः तथाघटवत्यपिकपालेघटनाशदशायामिदानीमिहकपालेनघटइत्यनु
भवात्तत्कालावच्छेदेनघटसामान्याभावः सिद्ध्यति नचेदानींतंतुषुनघटइत्यादिप्रतीतेरेतत्कालावच्छेदेनतंतुष्वेवघटाभावोविषयोनतंतुत्वावच्छेदेनतत्कालेतथेति
वाच्यं तंतुषुघटाभावस्यव्याप्यवृत्तित्वापत्तेःतत्कालस्यतदवच्छेदकत्वावगाहनेउक्तप्रतीतेर्भ्रमत्वापातात् नचतथाप्येतत्कालवृत्तिघटस्याभावएवतंतुषुभासतांतत्रे
तिवाच्यम् कालस्यप्रतियोगिकुक्षावप्रवेशेपितादृशप्रतीतेस्तत्वावच्छेदेनसमयेघटाभाववगाहित्वस्यानुभविकत्वादितिभावः तथाचेति गुणवत्संयोगवद्वाइत्यत्रा
दूवन्हिमान्धूमात् समयेघटवानेतत्कालत्वात् कपालेघटवदघटध्वंसादित्यादावव्याप्तिवारणायेत्यर्थः तदिति असमानाधिकरणंतदंशमित्यर्थः नोपादेयमिति येन
सम्बन्धेनयेनरूपेणचयद्व्याप्यवृत्तिस्तेनसंबंधेनतेनरूपेणचतत्साध्यतायांनोपादेयमित्यर्थः तेनसंयोगत्वेनाव्याप्यवृत्तेरपिसंयोगस्यसमवेतत्वेनरूपेणसाध्यता
यांकालिकतया:व्याप्यवृत्तेरपिद्रव्यत्वस्यसमवायेनसाध्यतायांचनप्रतियोगिव्यधिकरणपदमिति परंतुसमवायेनव्याप्यवृत्तेरपिद्रव्यत्वसत्वादेःकालिकेनसाध्य
तायांतु पादेयमेव अव्याप्यवृत्तिसाध्यकेसंयोगाभाववान्गुणत्वादित्यादौक्वचिदेवनदेयम् व्याप्यवृत्तिसाध्यकेतुप्रयोजनविरहात्सर्वत्रैवनदेयमित्यावेदयितुंस
र्वथैवेत्युक्तं साध्यसाधनभेदेनेति साध्यताघटकसम्बन्धादेरप्युपलक्षणंयद्यपिव्याप्यवृत्तिसाध्यकस्थलेतदप्रवेशेसत्तावान् जातेरित्यादावव्याप्तिः साधनवतिसं

जा·सि· त्पादौसमवायेनसत्ताभावस्यापिकालिकादिसम्बन्धेनवृत्तेः नचाभावेहेत्वधिकरणवृत्तित्वस्यविशेषणतयाविवक्षणान्नोक्तदोषः तथासत्यपिद्रव्यत्वशून्यंसत्वा
६ दित्यादावतिव्याप्तेःद्रव्यत्वरूपसाध्याभावस्यविशेषणतयावृत्तित्वविरहात् द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापिद्रव्यत्वानतिरिक्तत्वात् नचाभावप्र
तीतेःप्रमात्वरक्षार्थमभावाभावस्यातिरिक्ततयोक्तातिव्याप्तिवारणमितिवाच्यं अभावत्वंचेत्यग्रिमग्रन्थेनभावाभावसाधारणस्याभावत्वस्यनिर्वचनविरोधापत्तेःघट
त्वाद्यभावस्यकालिकसम्बन्धावच्छिन्नाभावेस्वरूपसम्बन्धेनसाध्येगगनत्वादिहेतावव्याप्तेस्तथाप्यनुद्धाराच्च विशेषणतयागगननिष्ठस्यघटत्वाभावस्यैवतादृश
घटत्वाभावाभावाभावत्वकल्पनात्तावतेवाभावप्रतीतेःप्रमात्वसंभवात् अतएवसाध्यताघटकसंबंधेनसाध्यवत्वबुद्धेर्विषयविधयाप्रतिबन्धकतावच्छेदकोयःसंबं
धस्तेनसंबंधेनहेतुसामानाधिकरण्यमभावस्यग्राह्यमित्युक्तावपिननिस्तारःतथाविधसम्बन्धेनहेतुसामानाधिकरण्याप्रसिद्ध्याप्रागुक्तगगनत्वादिहेतौद्रव्यत्वाभाव व
ज्जातित्वादित्यादौचाव्याप्तेः तथापिसाध्यतावच्छेदकसम्बन्धेनप्रतियोगिमत्ताबुद्धेर्विषयतयाप्रतिबंधकतावच्छेदकोयःसंबन्धस्तेनसम्बन्धेनहेत्वधिकरणवृत्तित्वमभा
वस्यविवक्षितमित्यदोषः तथाचद्रव्यत्वाभाववत्जातित्वादित्यादौविशेषणताविशेषेणजातित्वाभावबुद्धेर्विषयविधयाप्रतिबंधकतावच्छेदकोयःस्वरूपसंबन्धस्तेनजातित्व
स्वरूपाभावस्यप्रसिद्धेरितिभावः वस्तुतोव्याप्यवृत्तित्वमत्रसाध्यतावच्छेदकसम्बन्धेनयत्स्वाधिकरणंतद्वृत्त्यभावस्यतादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपंग्रंथकृतो
भिप्रेतंतादृशसाध्यकञ्चसमवायादिनात्मत्वादिःसाध्यतायाज्ञानवत्वादिकंसमवायेनात्मत्ववतिसमवायावच्छिन्नात्मत्वाभावस्यकेनापिसंबन्धेनावृत्तेः तथाचतादृशसा
ध्यकएवनोपादेयम् सत्तावान्जातेरित्यादौपुनरुपादेयमेवसत्ववतिस्पंदादौसमवायावच्छिन्नसत्ताद्यभावस्यापिकालिकादिसंबंधेनवर्तमानतयासत्तादेर्निरुक्तव्याप्यवृ
त्तित्वाभावद्व्याप्यवृत्तिताघटकस्यस्वाधिकरणवृत्तित्वस्यसम्बंधसामान्येनप्रविष्टत्वात् एतल्लाभार्थमेवसर्वथैवव्याप्यवृत्तेरित्युक्तंतस्यसम्बन्धविशेषानियंत्रितत्वात् व्य
भिचारादिस्तुसम्बन्धोनवृत्तिनियामकस्तेनात्मत्वादेरपिनव्याप्यवृत्तिताहानिरितिध्येयम्। सर्वथैवव्याप्यवृत्तिसाध्यकेप्रतियोगिवैयधिकरण्याघटितव्याप्तिविशिष्टहेतुमत्
त्तानिश्चयेपीत्तरानुमितौनोपादेयम् प्रतियोग्यसमानाधिकरणांशोजनकतावच्छेदकेनोपादेयः। साध्यसाधनभेदेनकार्यकारणभेदेनव्याप्तेः कारणतावच्छेदकघटकव्याप्तेर्भे
दात् भिन्नत्वादित्यपिवदंति एकधर्मावच्छिन्नप्रतियोगिताया: प्रतियोगिव्यक्तीनांभेदेप्यैक्यमितिनव्यमतेवन्हिमान्धूमादित्यादौवन्ह्यादिसामान्याभावमादायाव्याप्त्यसंभवा
दतिव्याप्तिवारणमेवप्रयोजनमाहतेनेति नचविशिष्टसत्वस्यव्याप्यवृत्तितयातत्साध्यकेप्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमितिवाच्यंजातौविशिष्टसत्वव्यभिचा
रज्ञानदशायामपिविशिष्टसत्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगित्वज्ञानाद्विशिष्टसत्वसाध्यकानुमितिप्रसंगस्यैवप्रकृतेऽतिप्रसङ्गपदार्थत्वात् विशिष्टसत्व

यद्यपिप्राचांमतेऽपितादृशाव्याप्त्यसंभवःतथापिसमनियताभावयोरैक्यमतेऽव्याप्तिवारणायप्रतियोगिवैयधिकरण्यस्याविवक्षणात् अव्याप्तिःतस्मान्नव्यनेत्युक्तं

वा २ धूमोभयवान् वन्हेः २

वस्तुतो व्याप्यवृत्तित्वविरहात्

स्याद्युक्तरीत्याऽव्याप्यवृत्तित्वविरहाच्च विशिष्टस्यातिरिक्तत्वमते तत्रातिव्याप्त्यसंभवादाह भूतत्वेति प्रांचस्तु विशिष्टसत्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिक
रण्याप्रवेशात् भूतत्वेत्यादि साध्यान्तरम् तत्र भूतत्वं चात्मान्यत्वे सति विशेषगुणवत्त्वम् मूर्तत्वमवच्छिन्नपरिमाणवत्त्वं तदुभयं चाव्याप्यवृत्त्येव घटादौ तु सत्तिकालावच्छेदे
न तदुभयस्याभावसत्वादित्याहुः सार्वभौममतमाशंकते नचेतिवाच्यमित्यन्वयः तदभावः भूतत्वमूर्त्तत्वोभयाभावः सहजइति प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रवेशेपी
त्यर्थः। ननूभयत्वस्य विशिष्टत्वातिरिक्तत्वेपि सहजतः प्रतियोगिव्यधिकरणस्य विशिष्टत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकमेवोभयत्वमतो नातिव्याप्तिः विशिष्टत्वावच्छि
न्नाभावस्योभयाभावानतिरेकादत आह नवेति तदवच्छिन्नाभावः उभयत्वावच्छिन्नाभावः तदवच्छिन्नाभावात् वैशिष्ट्यावच्छिन्नाभावात् लिंगव्यत्ययेन नातिरिक्तइ
त्यनुषज्यते तथा चातिरिक्त एवेति भावः नचान्यत्रोभयाभावस्य विशिष्टाभावातिरिक्तत्वेपि प्रकृते भूतत्वविशिष्टमूर्त्तत्वाभावस्येव तदुभयत्वावच्छिन्नप्रतियोगिताकत्वे
समनियताभावयोर्लाघवेनैकत्वादिति वाच्यं तावतापि हेतुमतो यादृशप्रतियोगिता श्रयानधिकरणत्वं तादृशप्रतियोगितानवच्छेदकत्वस्य भूतत्वमूर्त्तत्वोभयत्वे नपा
यादतिव्याप्तितादवस्थ्यादिति भावः उभयत्वस्येति प्रत्यक्षसिद्धत्वादिति परेणान्वयः तथा च विरुद्धयोरिव समानाधिकरणयोरप्युभयत्वमतिरिक्तमेव विरुद्धाविरुद्धस्थली
योभयत्वप्रतीत्योः समाना कार त्वात् भूतत्वमूर्तत्वयोर्विरुद्धत्वभ्रमदशायामप्युभयत्वप्रत्ययाच्चेति भावः नचेति वाच्यमिति परेणान्वयः तत्र भूतत्वमूर्त्तत्वोभय
वानित्यत्र व्याप्तिरेवेति तथा च तस्य लक्ष्यतया तद्वारणप्रयासोऽनुचित इति भावः तथात्वेपीति उभयत्वाश्रयस्य मूर्तत्वस्य मनसि सत्त्वेपीत्यर्थः तथा च हेतुतावच्छेदकावच्छि
न्नहेत्वधिकरणावच्छेदेन साध्यतावच्छेदकावच्छिन्नवत्तास्थल एव व्याप्तिरतो नैतल्लक्ष्यमिति भावः। वृत्तिमतिव्याप्त्यभावस्य व्यभिचारनियतत्वाद्व्यभिचारं ग्राहयति
नात्रेति अत्र मूर्तत्वाश्रये मनसि नतु वह्न्यादिभेदमादायाव्याप्तेः प्रतियोग्यसमानाधिकरणपदेनैव वारणादत्यंतपदं व्यर्थमत आह अत्यंतपदं चेति अत्यंताभावत्वनिरू
पकं यत्प्रतियोगित्वं तदाश्रयवैयधिकरण्यविवक्षायाः फलमाह अन्यथेति तद्भेदस्य स्वसमानाधिकरणाभावांतरभेदस्य स्वस्वरूपानतिरिक्ततयेति अनवस्थाभयेने
त्यादिः दुर्लभत्वापत्तेरिति हेतुसमानाधिकरणाभावमात्रस्यैव स्वात्मकभेदप्रतियोगियदभावांतरं तत्समानाधिकरणत्वादिति भावः नच भावस्वरूपाभावस्यैव प्रतियोग्य
सामानाधिकरण्यं फलमिति वाच्यं तस्यापि स्वसमानाधिकरणाभावभिन्नत्वाद् भावमात्राधिकरणकद्रव्याभावमात्रप्रतियोगिको विशिष्टाभावाद्यनात्मको भावोधिकरण
भिन्नो नेष्यते लाघवात् अग्रे विवक्षणीयस्य साध्यताघटकसम्बन्धेन प्रतियोग्य सामानाधिकरण्यस्य वह्निमान्धूमादित्यादौ घटाभावे सत्त्वान्न सर्वत्राप्रसिद्धिः किंतु स्वरू
पसम्बन्धेनाभावस्य साध्यतायामेवेति सूचयितुमप्रसिद्धिमपहाय दुर्लभत्वमुक्तं अत्यंताभावत्वनिरूपकप्रतियोगितानवच्छेदकत्वविवक्षायाः फलमाह सर्वेषामिति

इदमपि ज्ञेयं + पृ४।पं४।

०पृ७पं११

जा॰सि॰ भावभेदस्यातिरिक्तत्वास्वीकारादाह अभावसाध्यकेति तथाच घटभिन्नं पटत्वादित्यादौ पटत्वसमानाधिकरणनिरुक्तप्रतियोगिव्यधिकरणगोत्वाद्यभावस्य घटभेदभिन्न- १०
७ त्वात्तादृशभेदस्य च गोत्वाभावरूपत्वात्तत्प्रतियोगितावच्छेदकमेव घटभेदत्वमित्यव्याप्तिरिति भावः संप्रदायइत्यस्वरसः तद्बीजं तु क्वचिद्वक्ष्यामः सर्वेषां हेतुसमानाधि-
करणात्यन्ताभावानामत्यन्ताभावत्वनिरूपकेन पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावात्मकेन प्रतियोगिना सामानाधिकरण्यादभावसाध्यकाव्याप्तितादवस्थ्यम् यादृशप्रति-
योगितावच्छेदकविशिष्टस्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वप्रवेशे तु व्यर्थमेवात्यन्तपदमिति ध्येयं गोध्वंसवत्त्वेनेति प्राचीनमते गवात्यन्ताभा-
वस्य गोध्वंसविरोधित्वादित्याशयः नच दैशिकविशेषणतया यत्र गोध्वंसस्याधिकरणं तत्रैव गवात्यन्ताभावस्य विरोधित्वात् कालिकसम्बन्धेन गोध्वंसवत्यपि प्रलये तत्
त्यन्ताभावसत्त्वे बाधकाभावान्नातिव्याप्तिरिति वाच्यं प्राचमते भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गोध्वंसवत्त्वात् अतएव तत्क्षणसंयुक्तकाले विशेषण-
तया वायुस्पर्शनाशस्य साक्षात्कारः शब्दानित्यतायां मिश्रैरुक्तः यद्यप्येवमपि नातिव्याप्तिसंभवः कालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्यैव प्रलये कालिकसंबन्धेन वर्त-
मानत्वात् ध्वंसादिमति दैशिकसम्बन्धेनैवात्यन्ताभावस्यानभ्युपगमात् तथापि प्रतियोगिवैयधिकरण्याघटितस्य व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्यावश्यं दैशिकविशे-
षणतयाऽभावे हेतुसामानाधिकरण्यघटितत्वात् तस्यैवातिव्याप्तिर्बोध्या नच कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दैशिकसम्बन्धेन हेतुमन्निष्ठात्यन्ताभावस्याप्रसिद्धा
० तथापि नातिव्याप्तिरिति वाच्यं सृष्टिकालवृत्तित्वादिविशिष्टगोत्वाभावस्यैव तादृशप्रसिद्धत्वादिति भावः मिश्रमतं निरसितुमाह संगगोभावेति अत्यन्ताभावपदेनेत्यादि
पृ११पं८ तथाच प्रलये गोत्वाद्यवच्छिन्नध्वंसवत्वादेव नातिव्याप्तिरिति भावः नच गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि साध्यतावच्छेदकसम्बन्धीभूतकालिकवि-
*इदमपि शेषणतावच्छिन्नप्रतियोगिताकत्वविरहात्कुतस्तमादायातिव्याप्तिव्युदास इति वाच्यं साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नस्यैव हेतुसमानाधिकरणाभाव-
ज्ञेयं प्रतियोगित्वस्य लक्षणे प्रवेशनीयत्वात्तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भावः यदीत्यस्पंद इति स्पंदवति खंडप्रलये सर्गांतरीयद्व्यणुकप्रागभाववत्वेन द्व्यणुकत्वावच्छिन्न-
९ नच ध्वंसविरहादतिव्याप्तिः खण्डप्रलये स्पन्दसत्त्वमानाभावः ब्रह्मणो वर्षशतमायुरित्यागमप्रसिद्धेरेवमानत्वात् नहि क्रियां विना मुहूर्त्तादिघटितस्य वर्षस्य सम्भव इति ननु
महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिस्तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पंदस्य सत्त्वात्तत्कालोत्पन्नपरमाणूत्तरसंयो-
गेन प्रलयपूर्वक्षण एव पश्चात्तस्य विनाश्यत्वात् तादृशपरमाणूत्तरसंयोगस्य कार्यद्रव्येण त्र्यणुकेन सहैव स्वीकारादनित्यत्व आश्रयनाशादेव तन्नाशसंभवादत्त
आह यदीदृष्टमिति केचित्तु स्वमते द्व्यणुकस्याभावात् स्पंदस्य खंडप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद्यदीदृष्टमित्युक्तमित्याहुः तच्चिन्त्यं नित्यज्ञानमादायसद्धेतु

प्रथमं तन्निवेशे हानिर्नेन अत्यन्तपद दीवे स हा राम १० नैर्ह स्यत

परमाणोः क्रियाततो विभागस्ततः पूर्वसंयोगनाशस्ततउत्तरसंयोगोत्पत्तिः द्व्यणुकनाशः ततः क्रियानाशस्तृतीयनाशः ततश्चरप्रसंयोग

वारणायजन्यमिति नित्यसुखाभिव्यक्तेर्मोक्षत्वमते सद्धेतुत्वमाशंक्य साध्यांतरमाह। दुःखंवेति ननु कार्यमात्रंप्रसदृष्टस्य हेतुत्वात् प्रलयप्रागक्षणेपितस्यसत्त्वं तथाचतदानी
मेवदुःखत्वावच्छिन्नध्वंसत्वान्नातिव्याप्तिः दुःखादेःस्वसाक्षात्कारनाश्यतया तदानीमसंभवात् उत्तरक्षणेसाक्षात्कारासंभवाद्विदितेप्रमाणाभावाच्च किंच यावद्ब्रह्मांडानां युगपत्
प्रलयानभ्युपगमे ब्रह्मांडांतरवर्त्तिदुःखमादाय असद्धेतुरेवायमतआह। यस्ततस्येति। अत्र चतदीयमुमुक्षुत्वादिसमयेतदीयज्ञानविरहाद्व्यभिचारः स्फुटएव द्व्यणुकत्वादेरिति खंडप्रलये
केषांचिद्ध्वंसस्य केषांचित्प्रागभावस्यसत्त्वात्तस्य च प्रतियोगितातिरिक्तवृत्तित्वेनानवच्छेदकत्वादितिभावः। ननु द्व्यणुकत्वावच्छिन्नानधिकरणकालवृत्तित्वविशिष्टस्यैवतद्ध्वंसस्य
प्रतियोगितावच्छेदकमेवद्व्यणुकत्वं अवच्छेदकत्वं चान्यूनवृत्तित्वमेवेत्यतआह। नहीति। ध्वंसादिप्रतियोगितायांगोत्वादिधर्मावच्छिन्नत्वेमानाभावः गौर्नष्टेत्यादिप्रतीतेर्गोप्रतियोगिक
ध्वंसावगाहितयैवोपपत्तेः बाधनिश्चयादिप्रतिबंधकत्वाद्यनुरोधेनैव भेदात्यंताभावयोर्गोत्वावच्छिन्नप्रतियोगिकत्वोपगमात् नचैवंतज्ज्ञात्वावच्छिन्नवत्ताबुद्धिंप्रतितज्ज्ञात्वावच्छिन्नाभाववत्ता
निश्चयत्वेन विरोधितया तद्गवात्यंताभावस्येवतज्ज्ञाध्वंसस्यापितज्ज्ञात्वावच्छिन्नप्रतियोगिताकत्वमावश्यकमितिवाच्यं एकसंबन्धेनतद्गवात्यन्ताभावग्रहेपिसम्बन्धान्तरेणतज्ज्ञात्वा
वच्छिन्नवत्ताबुद्ध्युत्पादात् सम्बन्धाविशेषमंतर्भाव्यैवात्यंताभावग्रह स्यप्रतिबंधकतया ध्वंसवत्ताग्रहसाधारण्याभावात् ध्वंसत्वस्याभावत्वाघटितत्वेन तदवगाहिबुद्धेरत्यन्ताभा
वसाधारण्याद्योगाच्चेत्याशयेनाह। मतेपीति। ननु प्रतियोगिमतद्द्वेत्यसिद्धं तत्रात्यन्ताभावानुपगमादतआह। अन्यथेति। अत्यन्ताभावस्येति गोत्वादिनागवात्यन्ताभावस्येत्यर्थः।
तिनगगनाद्यभावस्यगोविशिष्टगोत्वाद्यभावस्यवाप्रलयवृत्तित्वेपिनक्षतिः। कालमात्रेति। अत्रगवात्यन्ताभावस्यदैशिकविशेषणतया कालमात्रावृत्तित्वप्राच्यैरिष्यतएवसदा
तनत्वव्यवहारस्यकालिकविशेषणतयैवसंभवादितिभावनीयम्। ननु प्रतियोगिविशिष्टेपिकालेसदत्यन्ताभावसत्त्वेगवाद्यधिकरणावच्छेदेनेदानींगौर्नास्तीत्यपिप्रतीतिः
कथंनस्यादतआह। द्वयंत्विति। एकस्यप्रतियोगिमतः कालस्यदेशभेदःप्रतियोग्यनधारदेशः तथात्वं अत्यन्ताभाववत्त्वं अपरस्येति ध्वंसादिमतः कालस्येत्यर्थः स्वरूपाव
च्छिन्नमितिनिरवच्छिन्नमित्यर्थः तथात्वमितिपूर्वेणान्वयः नन्विदानीमश्वेनगोत्वमित्यादिप्रतीतेः कालवृत्तितयाश्ववृत्तितयाच गोत्वाभावावगाहितयैवोपपत्तौदेशस्यका
लवृत्तितावच्छेदकत्वेमानाभावइत्यतआह। देशइति। इवार्थसादृश्यं तच्चानुभूयमानत्वेनतथाचानुभवएवदेशस्यकालवृत्तितावच्छेदकत्वेमानं अन्यथागृहेनेदानीं
गौरित्यादिप्रत्ययबलात्गृहादिदेशस्यगवात्यंताभाववत्तायामपिकालोनवच्छेदकःस्यात् तत्रगवाभावेगृहवृत्तित्वतत्कालवृत्तित्वोभयावगाहितायाः सुवचत्वादितिभावः।
नन्वेवमपिप्रतियोगिवैयधिकरण्यघटितस्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्यगोमान्गोत्वादित्यादावतिव्याप्तिर्गवाद्यभावस्यसृष्टिकालेप्रतियोगिसमानाधिकरणतयाल
क्षणाघटकत्वादाह। तच्छून्येति। गवादिशून्येचेत्यर्थः। तथाचयत्किंचिद्धेत्वाधिकरणावच्छेदेनप्रतियोगिवैयधिकरण्यंयदग्रेवाच्यंतस्यगवाद्यभावेपिसत्त्वान्नतत्रातिव्याप्तिः

इतिचेन्नइत्यसेइत्यस्य। यदागोत्वं तदागौरित्यत्रवारणायसंसर्गाभावोनिवेश्यः यदातस्यात् इष्टमित्यादावतिव्याप्तेः) किंत्वत्यंताभाव एव
तथाचयदागोत्वमित्यादावतिव्याप्तितादव

१ ...धवात् १पृ७पं ८ मिश्रमतखंडन
मूले पृ२पं ८

पृ७ पं६ अत्र ... अन्योन्याश्रयात्

द+ अत्यन्तपूर्वे ऽसैन पूर्वोक्त दोषः अन्ये दोषा न रं दीयते॥ ... शून्यत्वासिद्ध्य ... स्वव्याप्य ... ॥

* अत्यन्तपूर्वि

ॐ आदिपदात् आत्माश्रयान्योन्याश्रयपरिग्रहः

जा॰ सि॰ रितिभावः नचेतिवाच्यमित्यन्वयः संसर्गाभावविशेषइति सदातनसंसर्गाभावइत्यर्थः संसर्गेति स्वप्रतियोगितावच्छेदकसंसर्गेण परस्प्रतियोग्यारोपस्तज्जन्यप्रतीतिविष

८ योऽभावस्तत्त्वमित्यर्थः संसर्गस्तता दात्म्यभिन्नोग्राह्यस्तेनभेदव्युदासः ध्वंसप्रागभावयोरप्युत्तरकालपूर्वकालावेवप्रतियोगितावच्छेदकसंबन्धाविति ताभ्यामेवसंबन्धा

भ्यांप्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरिति प्राचामाशयः घटितमिति तथाचचक्रकादिप्रसंगइतिभावः तत्रजन्यत्वेनियमोतरस्यसाध्य

संबन्धितावच्छेदकरूपवत्त्वादिस्वरूपस्येत्यर्थइतिकेचित् नन्वभावबुद्धौप्रतियोग्यारोपस्य हेतुतास्वीकारेमानाभावादुक्तसंसर्गाभावत्वघटितव्याप्तिलक्षणस्यासंभवः

कथंचिद्भावलौकिकप्रत्यक्षप्रत्यारोपस्यहेतुतास्वीकारेप्यतीन्द्रियसाध्यकेव्यभिचारिण्यतिव्याप्तिः तत्रहेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतयानिरुक्तसंसर्गा

॰समानाधिकरण्यविशिष्ट भावत्वविरहादतआह वक्ष्यतेचेति भेदभिन्नाभावत्वंसंसर्गाभावत्वंसदातनत्वविशिष्टंचतदेवात्यन्ताभावत्वंभेदत्वंसंसर्गविधयातादात्म्यावच्छिन्नप्रतियोगिताका

धानान्तर भावत्वमनुयोगितविशेषोवेत्याशयः यत्तुभेदत्वादिवत्संसर्गाभावत्वमप्यखण्डोपाधिरिति तत्तुच्छंभेदत्वादिवदखण्डस्यसंसर्गाभावत्वस्यानुभवेनाविषयीकरणात्

तान्त्रिकव्यवहारस्यभेदभिन्नाभावत्वादिनाप्युपपत्तेः) वस्तुगतमनुरुध्याह अनुपदमितिविवेचइष्यतइति तदपिवानोपादेयमित्यादिग्रंथेनेतिशेषः साध्यतावच्छेदक

* अन्योन्याश्रयात् वाकारः सम्बन्धेनप्रतियोगिवैयधिकरण्यघटितलक्षणमभिप्रेत्याह प्रयोजनविरहइति धूमसमानाधिकरणस्य वन्ह्यादिभेदस्यप्रतियोगिसमानाधिकरणत्वादेवतत्साध्याव्याप्ति

विरहादितिभावः व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्यसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटितत्वात् तदभिप्रेत्याह अव्याप्तिश्चेति तादात्म्येनगवादेः सा

ध्यतायांतत्संबन्धावच्छिन्नात्यन्ताभावाप्रसिद्ध्यासास्नावत्त्वादाव्याप्तिरित्यर्थः इदमप्यभाववृत्तिरभावोनाधिकरणस्वरूपोनवाधर्मात्यन्ताभावएवधर्मिणोभेदइतिमते

नान्यथापटात्यन्ताभावस्वरूपस्यघटात्यन्ताभावभेदस्यतादात्म्यसम्बन्धावच्छिन्नत्वात्पटत्वसंन्ताभावस्यपटभेदस्वरूपस्यवापटनिष्ठप्रतियोगितायास्तादात्म्यसम्बं

धावच्छिन्नत्वादव्याप्तिविरहादितिध्येयम् ननुविषयतायावृत्त्यनियामकत्वमतेज्ञानाभावस्यगगनादौसहजएवप्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरत आह विशे

इदमपि ज्ञेयं वस्तुतो व्याप्य षगुणइति अत्रव्यभिचारनिरूपकः कालोदिक् तत्रकालेकालिकसम्बन्धेनदिशिदैशिकसम्बन्धेनविशेषगुणस्यसत्त्वात्तदभावोनप्रतियोगिव्यधिकरणइतिभावस्तयातिव्या

प्तिः विशेषपदंव्यभिचारित्वरक्षायैइत्युक्त्वादिक्कालौसम्बन्धसामान्येनविशेषगुणस्यमनस्यसत्त्वान्नातिव्याप्तिसंभवः कालोपाधित्ववदिगुपाधित्वस्यापिमनस्यसत्त्वादव्या

वर्तकत्वादन्यथामनसः कालोपाधित्वमपिस्यादतउक्तं मनोन्येति यत्तुमूर्तस्यदिगुपाधित्वमहादिग्वृत्तित्वंयामवच्छेदकत्वंनत्वधिकरणत्वमितिप्राचांमतेसम्बन्धसामान्येनै राम

वतस्यविशेषगुणानधिकरणत्वान्मनोन्यपदमिति तन्मंदंएवमप्यवच्छेदकतासम्बन्धेनैवमनसोविशेषगुणवत्त्वायास्संभवेनमनोन्यपदवैयर्थ्यापत्तेः। ननुस्वमतेदिक्काल ८

वृत्तित्वविरहात्) ॥ असमानकालीनपदाद्यभावमादाय। अथवा॰ (॰ कार्यकारणभावानुरोधेनतस्यवृत्तिनियामकत्वं

पृष्ठ १४ पं ८ ज्ञेयं

समवायसंबंधेन ... अवच्छेदकतासंबन्धेन यत्तस्यकारणत्वं

स्ववैशिष्ट्यं च स्वप्रतियोगितावच्छेदकसंबंधावच्छिन्नताहृ सधर्मावच्छिन्ना ... धिकरणत्वसंबंधेन ह्यधिकरणवन्निष्ठप्रतियोगिताधी स्ववैशिष्ट्यान्यत्वसंबंधेन । स्ववैशिष्ट्यं च स्वावच्छे

योरपीश्वरानतिरिक्तत्वात्तत्राव्याप्तिरेवेत्यत आह जातीति नच जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादेव नातिव्याप्तिरिति वाच्यं समवायेनाव्यापकत्वग्रहदशायामपि सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकत्वज्ञानात् समवायेन जात्यनुमित्यापत्तेरेव प्रकृतेतिव्याप्तिपदार्थत्वात् जात्यादेरपि प्रागुक्तव्याप्यवृत्तित्वविरहाच्च अतिव्याप्तिं योजयति साध्यशून्येति विशेषणतादिकृता कालिकी च एकार्थेति समवायस्यापि स्वात्मक एव स्वरूपसम्बन्ध इति ॥ तत्रापि जात्येकार्थसमवायोस्तीत्याशयः जातिः सतीतिवत्समवायः सन्निति प्रतीतेरविशेषात् भावत्वात्समवेतत्वादित्यपि केचित् प्रतियोगितेति तथा च ज्ञानाभावस्य तादृशेन समवायसंबंधेन घटादौ प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिः नच तादृशयत्किंचित्संबंधेन प्रतियोगिसामानाधिकरण्याभावोक्तौ वह्निसामान्याभावस्यापि धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन प्रतियोग्यसमानाधिकरणत्वात् वह्निमान्धूमादित्यादावव्याप्तिः स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन तथात्वोक्तौ च जातिमान् जातित्वादित्यादावतिव्याप्तिः समवायेन जात्यभावस्यैव तादात्म्येन जातिमद्वृत्तेः (?) तस्य च स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन यज्जातिसंबंधितद्वृत्तित्वेन प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यं स्वप्रतियोगितयादृशसम्बन्धावच्छिन्नतादृशसम्बन्धेन यत्प्रतियोगिसंबंधितद्वृत्तित्वाभावस्योक्तत्वात् संयोगसामान्यावच्छिन्नवन्ह्यभावप्रतियोगितायां महानसीयसंयोगत्वादिविशिष्टानवच्छेद्यत्वात् यावन्त्यभावस्य पर्वतादौ महानसीयसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेप्यव्याप्त्यभावादिति ध्येयम् ननु समवायावच्छिन्नवह्न्यभावमादाय धूमादावव्याप्तिवारणार्थमग्रे साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेन प्रतियोगित्वं विशेषणीयं तथा च कपिसंयोगवतस्तादात्म्येन साध्यतायामव्याप्तिः भेदमात्रस्यैव स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोग्यधिकरणाप्रसिद्धेरत आह सम्बन्धितेति। नच तादात्म्येन वक्ष्यमाणस्यैव व्याप्यवृत्तित्वात्तादृशसम्बन्धेन साध्यतायां प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यं मूलावच्छेदेन कपिसंयोगवद्भेदस्य वृक्षादेस्स्वयमंगीकारात्तादात्म्येन कपिसंयोगवतोप्यव्याप्यवृत्तित्वात् नचैवं प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावेत्यग्रिमनिष्कर्षेप्यप्रतीकारः प्रतियोगितावच्छेदकसम्बन्धेन ये स्वप्रतियोगिसम्बन्धिनस्तन्निष्ठव्यक्तित्वावच्छिन्नभेदकूटविशिष्टहेतुमद्वृत्तित्वस्यैव तत्र वक्तव्यत्वात् वक्ष्यमाणतस्य तादात्म्यसम्बन्धे नापि न कस्यचित्प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक् केचित्तु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्वयत्सम्बन्धावच्छिन्नत्वोभयाभाव इत्यादिवक्ष्यमाणनिष्कर्षस्य तादात्म्येन साध्यतायामव्यभिचारिण्यतिव्याप्तिरतः प्रतियोग्यनधिकरणत्वं परित्यज्य प्रतियोग्यसम्ब[gap]न्धित्वं चावश्यं तत्र निवेश्यमित्याशयेन सम्बन्धित्वमुक्तमित्याहुः ननु कपिसंयोगाभावस्यापि गुणादौ प्रतियोग्यसमानाधिकरणत्वात् कपिसंयोगी एतत्त्वादित्यादावव्याप्तिरत आह तद्विशिष्टस्येति प्रतियोगि

(स्वप्रतियोगिकसमवायतादात्म्यस्वप्रतियोगिकसमवायप्रतियोगित्वान्यतररूप) A ११ कपिसंयोगवान् १ वह्निमान् विरहात्
ज्यसंबंधित्वकल्पेऽतिव्याप्यजात्)

यत्किंचि ... इतरत्वारकं ... साध्यतावच्छेदकसंबंधेन प्रतियो

जा॰ सि सामानाधिकरण्याभावविशिष्टस्येत्यर्थः तथाच हेतुमति वृक्षादौ संयोगवद्वृत्तित्वाभावविशिष्टः संयोगाभावो नास्तीति नाव्याप्तिः विशिष्टनिरूपिताधेयत्वमप्यतिरि रु॰
९ क्तमित्याशयेनेदं यद्वात् द्विशिष्टस्य हेत्वधिकरणेन्वयः तत्र च षष्ठ्यर्थोधिकरणत्वं तेन प्रतियोगिसामानाधिकरण्याभावविशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्ति
त्वमभाववाच्यमित्यर्थः यद्यपि प्रतियोग्यसमानाधिकरणत्वं हेतुविशेषणीकृत्य प्रतियोग्यसामानाधिकरण्यविशिष्टो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगि
तानवच्छेदकत्वं वाच्यं तावतैव संयोग्येतत्वादित्यादौ नाव्याप्तिसंभावना वृक्षस्य प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणत्वाभावात् तथापि कर्मणि च संयो
गाभावः प्रतियोग्यसमानाधिकरण इत्यग्रिममूलस्वरसेन हेतुसमानाधिकरणाभावस्यैव विशेषणं प्रतियोग्यसमानाधिकरणत्वं मतमेतावान् प्रयासइत्यवधेयम् ननु ४४
भेदस्य व्याप्यवृत्तितया प्रतियोगिसमानाधिकरणभिन्नत्वोक्तौ च प्रागुक्ताव्याप्तिवारण संभवे तद्विशिष्टस्येत्यादिकं विफलमत आह तद्वृत्तीति प्रतियोगिमद्वृत्तिभि रू
न्नत्वमित्यर्थः अन्येति अस्वरसादित्यन्वयः तदभाववत्त्वमिति तथाच संयोगीस त्वादित्यादावतिव्याप्तिरितिभावः ननु संयोगाभावे गुणे न संयोगसामानाधिकरण्य
मिति प्रतीतिबलाद्गुणावच्छेदेन संयोगाभावे प्रतियोगिसामानाधिकरण्याभावसत्त्वान्नातिव्याप्तिरत आह प्रतीतेरिति उक्तप्रतीतेः संयोगाभावनिष्ठस्य संयोगसमा
नाधिकरण्यस्यावच्छेदकत्वाभावमेव गुणादौ संयोगानधिकरणीभूतगुणवृत्तित्वमेव वा संयोगाभावादावगाहते इति भावः वक्ष्यतिमूलकारः तच्च तदपि हेत्वधिकरण
इति तेन कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकीभूतगुणाद्यवच्छिन्नत्वेपि कपिसंयोगी एतत्वादित्यादौ नाव्याप्तिः ननु हेत्वधिकरणे प्रतियोगिवैयधिकर
ण्यावच्छेदकावच्छिन्नत्वं प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणवृत्तित्वं तच्चाव्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धम् गुरुतरं चेत्यत आह प्रतियोग्य
नधिकरणेति कस्यचिदिति अनधिकरणत्वमिति परेणान्वयः तद्व्यक्त्यन्तरेति प्रतियोगिव्यक्त्यन्तरेत्यर्थः स्वमते संयोगसामान्याभावस्य केवलान्वयित्वात् तत्साध्य
दि कसत्त्वादित्याद्यसद्धेतुरेवेत्यतः साध्यान्तरमाह द्रव्यत्वाभावेति यद्यपि द्रव्यत्वाभावस्याव्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसंगतम् नचा
त्र कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावः साध्यः सच गुणाद्यवच्छेदेन काल एवाव्याप्यवृत्तिरिति वाच्यं तथासति तस्य केवलान्वयित्वात्तत्साध्यकसत्त्वादेः सद्धेतुत्वेन
तत्रातिव्याप्तेरुपन्यासस्यानौचित्यात् तथापि सत्त्वहेतौ द्रव्यत्वाभावस्य व्यभिचारधीदशायामपि प्रतियोगिसामान्यानधिकरणसत्त्ववन्निष्ठाभावप्रतियोगितानवच्छेद
कं द्रव्यत्वाभावत्वमित्याकारकव्यापकत्वज्ञानादनुमित्यापत्तिरेवात्रातिव्याप्तिशब्दार्थः वस्तुतो द्रव्यत्वाभावस्यापि न प्रागुक्तव्याप्यवृत्तित्वमिति ध्येयम् प्रथमसाध्ये राम
ऽतिव्याप्तिं ग्राहयति साध्याभाववत इति तत्प्रतियोगीति तस्य संयोगात्मनः साध्याभावस्य यः प्रतियोगी संयोगविशेषाभावस्तद्वत्त्वादित्यर्थः द्वितीयेति व्याप्तिप्रयोजय ९

नौर्थः संयोगीसत्वादावतिव्याप्तिर्नियेत्यर्थः) (प्रतियोग्यधिकरणानिरूपितवृत्तित्वाभावरूपवैय्याधिकरण्यकल्पेत्यर्थः)

द ( ) न+ कत्व

ति नित्यत्वादीति नित्यत्वादिविशिष्टं यद्द्रव्यत्वं तदभावात्मकोयः साध्याभावस्य प्रतियोगी तदधिकरणत्वात् साध्याभाववतो द्रव्यस्येति पूर्वेणान्वयः ननु विशिष्टद्रव्यत्वाभा
वो न द्रव्यत्वस्वरूपस्य साध्याभावस्य प्रतियोगी किंतु नित्यत्वादिविशिष्टद्रव्यत्वस्यैवेति द्रव्यत्वं प्रतियोगिव्यधिकरणमेवस्यत आह स्वाभावेति स्वं नित्यवृत्तित्वविशिष्ट
द्रव्यत्वं नच नित्यत्वविशिष्टद्रव्यत्वाभावस्याभावो नित्यवृत्तित्वविशिष्टद्रव्यत्वविशिष्टस्यानतिरिक्ततया जन्यद्रव्येपि नित्यवृत्तित्वविशिष्टद्रव्यत्वस्याभावो नास्तीति
प्रतीतिप्रसंगात् किंतु नित्यकत्वादिकमेवेति नातिव्याप्तिरिति वाच्यं विशिष्टाधिकरणतायाः प्रतीतिनियामकतयैवातिप्रसंगभंगे द्रव्यत्वमपेक्ष्य नित्यानं तत्संख्यापरिमा
णादौ तादृशाभावत्वकल्पनायां गौरवात् अभावाभावस्यैव प्रतियोगित्वमिति सिद्धांतप्रवादाच्च नन्वेवमपि निखिलाभावस्यैव स्वाश्रयतत्तद्व्यक्तिवृत्तित्वविशिष्टं यत्स्वं
तदभावात्मकस्वप्रतियोगिनासह समानाधिकरणत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरव्याप्तिः एकव्यक्तिमात्रवृत्तीनां गुणाद्यात्मकाभावानामपि पूर्वं स्वगत
त्तित्वविशिष्टस्यस्वस्य योभावस्तादृशप्रतियोगिना साई सामानाधिकरण्यात् नचवस्यमाणखंडशः प्रसिद्ध्या गगनाभावएवप्रतियोगिव्यधिकरणस्तस्यापि नित्यवृत्तित्ववि
शिष्टो यो गगनाभावस्तदभावात्मकेन स्वप्रतियोगिना समं समानाधिकरणत्वात् गगनाभावस्यैव संयोगादिसम्बन्धेनाभावत्वावच्छिन्नाभावतया खंडशः प्रसिद्ध्यापि त
स्य प्रतियोगिव्यधिकरणत्वासंभवाच्च एतेन नित्यत्वादिविशिष्टस्य गगनाद्यभावस्य योभावस्तदभावत्वं न गगनाभावस्य तस्य केवलान्वयितया जन्येपि नित्यवृत्तित्ववि
शिष्टस्य गगनाभावस्याभावो नास्तीति प्रतीतिप्रसंगात् किंतु नित्यत्वादेरेव तथात्वमित्युक्ताविपि न निस्तार इति चेदत्र नव्याः पथाश्रुतस्य प्रागुक्तक्रमेण प्रतियोगिव्यधि
करणाभावस्याप्रसिद्ध्या वन्हिमान्धूमादित्यादौ सर्वत्रासंभवः स्यादतो यत्किञ्चित्स्वप्रतियोगित्वं यत्संबंधावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्न
सामान्यानधिकरणं यत्साधनाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव लक्षणे प्रवेशनीयं तथा च सद्धेतुस्थलद्रव्यं द्रव्यत्व
भाववान् सत्वादित्यत्रापि संयोगेन घटाद्यभावएवप्रतियोगिव्यधिकरणः तदीयं हि घटनिष्ठप्रतियोगित्वं यादृशसंयोगसम्बन्धावच्छिन्नं तादृशसंयोगसम्बन्धेन साधन
वतो द्रव्यस्य तदीयप्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमक्षतमेव नचैवमपि तदीयस्य साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्व
स्याप्रसिद्ध्यानसंगतिरिति पूर्वं क्षणवृत्तित्वादिविशिष्टस्य घटाद्यभावस्याभावएव तत्प्रसिद्धिरित्याहुः स्वावच्छेदकसम्बन्धावच्छिन्नस्वनिरूपकाभावप्रतियोगिसामा
न्यानधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाववदित्यग्रिमलक्षणाभिप्रायेणेदं संयोगेन घटाभावस्यैव प्र
तियोगिवैयधिकरण्यसौलभ्यादित्यपि वदंति प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वं विरुद्धमतः कपिसंयोगसामान्याभाव उक्तः वृक्षादावुत्पत्तिकालावच्छे

न्यान ७१ साध्यतावच्छेदकसंबंधेन । प्रतियोगितावच्छेदकसंबंधेन साध्यप्रयकल्पो । साध्यतावच्छेदकसंबंधसामान्ये । प्रतियोगिना घटि
ते त्याद्युभयकल्पः । पि उसं नवं । + एतादृशप्रतियोगिमादाय । घटीयसंयोगे न प्रमेयाज्ञानप्रतियोगिमादायापि । न च संयोगत्वे

x कपि +२४५

जा॰ सि॰ दिनगुणसामान्याभावसत्वाद्द्रव्यत्वादिकंपरित्यज्यात्मत्वंहेतुरुक्तः यद्यपि वृक्षादेः स्वसमवेतकपिसंयोगप्रतियोगिनः समवेतसामान्याभावस्य द्रव्यमात्रसमवेताभावस्य ल॰
१० चानधिकरणत्वाद्द्रव्यत्वादेरपिहेतुतायामव्याप्तिः सम्भवत्येव तथापिसत्ताद्रव्यत्वयोरेवसमवेताभावद्रव्यमात्रसमवेताभावयोरभावत्वंलाघवात्कपिसंयोगाद्यात्मकसम
वेतमात्रस्यनतथात्वंगौरवादित्याशयः गुणसामान्याभावस्यसंयोगप्रतियोगित्वमाविष्कर्तुंगुणानामित्युक्तं तत्प्रतियोगिनेति कपिसंयोगीयप्रतियोगितावच्छेदकेत्य
र्थः नचगुणसामान्याभावस्याभावोद्रव्यत्वमेवलाघवान्नगुणो गौरवात् ततः संयोगप्रतियोगित्वंनगुणसामान्याभावस्येतिवाच्यं घटादावुत्पत्तिदशायांगुणसामान्या
भावस्यैवसत्वेनद्रव्यत्वस्यतदभावत्वासम्भवाद्भावाभावस्यप्रतियोगित्वनियमाच्चेतिभावः यादृशेति तथाच गुणसामान्याभावनिष्ठप्रतियोगितायाअवच्छेदकंयद्गु
णसामान्याभावत्वंहेतुमतस्तदवच्छिन्नानधिकरणत्वेपिसंयोगाभावत्वस्यतादृशप्रतियोगितानवच्छेदकत्वात्तद्रूपेणसाध्यतायामात्मत्वहेतोनाव्याप्तिः द्रव्यत्वा
भाववान्सत्वादित्यादौतुद्रव्यत्वाभावत्वावच्छिन्नानधिकरणत्वंयद्धेतुमतस्तन्निष्ठाभावस्यतादृशप्रतियोगितावच्छेदकमेवद्रव्यत्वाभावत्वमतोनातिव्याप्तिरि
तिभावः नचवन्हिमान्तत्पर्वतत्वादित्यादौतद्वन्हिसंयोगसम्बन्धेनसाध्यतायामव्याप्तिः तत्सम्बन्धावच्छिन्नघटाद्यभावप्रतियोगिनः तेनसम्बन्धेनाधिकरणाप्र
सिद्धेरितिवाच्यं यत्प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेनयादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभा
ववत्वहेतुमतस्तेनसम्बन्धेनतादृशप्रतियोगितानवच्छेदकत्वस्यविवक्षितत्वात् घटत्वावच्छिन्नाधिकरणतासामान्यस्यवत्तद्वन्हिनिरूपितसंयोगसम्बन्धाव
च्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेनाभावस्यहेतुमतिसत्वेनतादृशसम्बन्धेनघटाद्यभावस्यैवप्रतियोगिव्यधिकरणत्वसम्भवात् तादृशाभाववत्वंचहेतुम
तोनिरवच्छिन्नविशेषणतयैववाच्यमतः कपिसंयोगाधिकरणत्वाभावस्यवृक्षवृत्तित्वेपिनाव्याप्तिः अत्रप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वंसाध्यतावच्छेदकता
घटकसम्बन्धेनैवग्राह्यंतेनायः पिंडस्यकालिकादिसम्बन्धेनयद्धूमत्वविशिष्टतृणादिकंसंयोगेनतस्याधिकरणत्वेपिधूमवान्वन्हेरित्यादौनातिव्याप्तिः प्रतियोगिता
वच्छेदकताघटकसम्बन्धेनतदवच्छिन्नत्वनिवेशेतुप्रतियोगितानवच्छेदकत्वमित्यत्रावच्छेदकत्वंसाध्यतावच्छेदकताघटकसम्बन्धेनैवग्राह्यम् । अन्यथा
विषयितासम्बन्धेनरूपत्वावच्छिन्नस्यज्ञानादेः पृथिव्यादौसमवायेनाभावस्यसत्वाद्रूपावच्छिन्नपृथिवीत्वादित्यादावव्याप्तिप्रसंगात् वस्तुतः साध्यतावच्छेदकता
घटकसम्बन्धावच्छिन्नयत्प्रतियोगितावच्छेदकत्वंतन्निरूपितस्वरूपसम्बन्धेनैवनिरुक्तप्रतियोगितावच्छेदकत्वस्याभावः । साध्यतावच्छेदकधर्मेवक्तव्यः तेनव राम॰
न्हिमान्धूमादित्यादौयत्रवन्हित्वादिनिरूपितसमवायादिसंबंधेनवन्हित्वादेः साध्यतावच्छेदकत्वंतत्रतादृशसंबंधावच्छिन्नस्यप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभाव १०

धूमवान्वन्हेरित्यविसिद्धसत्तावान्जातेः वन्हिमान्धूमात् कपिसंयोगी एतत्वात्

४न

प्रतियोगितावच्छेदकत्वस्याप्रसिद्धावपिनक्षतिरितिध्येयं अत्रयादृशप्रतियोगितावच्छेदकधर्मेतादृशप्रतियोगिताश्रयाधिकरणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतावच्छेदक
त्वस्याधिकरणतावच्छेदकत्वस्यचद्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवत्त्वमेवयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्यार्थोबोध्यः तेनधूमवदित्यादिप्र
तीतेवस्यकूटाभिःपर्वतत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौधूमत्वाद्यखंडधर्मावच्छिन्नाधिकरणतायांमानाभावात् धूमादिसा
मान्याभावप्रतियोगितावच्छेदकंयद्धूमत्वादिकंतदवच्छिन्नाधिकरणत्वाप्रसिद्धावपिधूमवान्वन्हेरित्यादौनातिव्याप्तिर्धूमाधिकरणतत्तद्व्यक्तिभेदकूटवत्त्वमादायैवधूम
सामान्याभावस्यप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसंभवादितिध्येयं नन्वत्रप्रतियोगित्वंनातिरिक्तःपदार्थःप्रतियोगित्वादिकंतुस्वरूपसम्बन्धविशेषइत्याद्यु
त्तरग्रंथविरोधात् किंतुस्वरूपसम्बन्धविशेषः सचयदिप्रतियोगिस्वरूपःतदावन्हिमान्धूमादित्यादौसर्वत्रासंभवः पटादिस्वरूपस्यैकस्यैवपटाद्यभावप्रतियोगित्व
स्यपटत्वसमवेतत्वज्ञेयत्वावच्छिन्नतयातादृशावच्छेदकीभूतज्ञेयत्वावच्छिन्नस्यहेतुमतिसत्वात् प्रतियोगिव्यधिकरणाप्रसिद्धेः नचप्रतियोगितावच्छेदकरूप
मेवप्रतियोगित्वमित्यदोषः समवायेनवन्हेःसाध्यत्वेधूमादावतिव्याप्तिप्रसंगात् समवायावच्छिन्नवन्ह्यभावस्यवन्हित्वरूपप्रतियोगित्वंसमवायवत्संयोगस्यापित
दवच्छेदकसम्बन्धतयातत्त्वावच्छेदकीभूततादृशसम्बन्धेनसाधनवतःप्रतियोग्यनधिकरणत्वाभावात् प्रतियोगितावच्छेदकीभूतयत्किंचित्संबंधेनप्रतियोग्यनधिक
रणत्वोक्त्यातदुद्धारणेतुसंयोगेनवन्हिसाध्यकेधूमादावव्याप्तिःसमवायावच्छिन्नवन्ह्यभावस्यैवसमवायेनप्रतियोगिव्यधिकरणस्यवन्हित्वस्वरूपंयत्प्रतियोगित्वंतस्यैवसं
योगेनाप्यवच्छिन्नत्वादितिचेदत्रवदंति प्रतियोगिस्वरूपंतदवच्छेदकस्वरूपंवायत्प्रतियोगित्वंतदपिकस्यचिदभावस्यकेनचिद्धर्मेणसम्बन्धेनवावच्छिन्नंव्यवहारव
लान्नतुसर्वेणसम्बन्धेनधर्मेणवासमवायावच्छिन्नवन्ह्यभावप्रतियोगित्वंनसंयोगावच्छिन्नमित्यादिव्यवहारात् तथाचयदभावीययत्प्रतियोगितावच्छेदकसंबन्धेनयदभा
वीययत्प्रतियोगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासम्बन्धित्वंहेतुमतस्तदभावीयप्रतियोगितानिरूपितावच्छेदकताशून्यत्वंसाध्यतावच्छेदकेनिवेश्यमित्य
दोषः तत्प्रतियोगित्वेत्यपहाययादृशप्रतियोगितेत्यभिधानादेवतादृशार्थलाभात् नचप्रतियोगितावच्छेदकरूपंयदिप्रतियोगित्वंतदायदभावीययादृशप्रतियोगिताव
च्छेदकसंबंधेनतदभावीयतादृशप्रतियोगितावच्छिन्नस्यानधिकरणत्वंहेतुमतइत्येवसम्यक्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशोव्यर्थइतिवाच्यंव
न्हिधूमोभयवान्वन्हेरित्यादावतिव्याप्त्यापत्तेः हेतुमन्मात्रस्यैववन्हिधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणाः ग्राह्यसामाना
धिकरण्यइति परामर्शेविषयसामानाधिकरण्यइत्यर्थः संबन्धविशेषेणैवसाध्यसाधनयोःसामानाधिकरण्यज्ञानादनुमितिस्तत्प्रतिबंधकतयैवविरोधस्यहेत्वाभास

५४ रा

त्वमितिमतेनेदं यदि च येन केनापि संबंधेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः स्वव्यापकसाध्यसंबंधिनामात्रं वा व्याप्तिः व्यापकत्वदले साध्यसाधनयोः
संबंधविशेषप्रवेशनादेवातिप्रसंगभंगादितिविभाव्यते तदापरामर्शेन साधनस्यानुमित्याच साध्यस्य ग्राह्य यत्पक्षतावच्छेदकेन साइं सामानाधिकरण्यं तत्र प्रविष्टो यादृशः संब
धइत्यर्थो बोध्यः धूमवान्वह्नेरित्यादौ महानसीयसंयोगेन सद्धेतौ संयोगमात्रेण हेतुमत्तामादायाव्याप्तिः एवं द्रव्यत्वसाध्यके घटानुयोगिकसमवायेन सत्त्वादिहेतौ सम
वायमात्रेण तद्वत्तामादायापीत्यतो यत्संबन्ध इत्यपहाय यादृशसंबंध इत्युक्तं साध्यस्य चेति ग्राह्य सामानाधिकरण्ये प्रविष्ट इत्यन्वयः धूमाधिकरणे तत्तत्संयोगेन वह्न्य
भावसत्त्वाद्वह्निमान्धूमादित्यादावव्याप्तिरतो यादृश इत्युक्तं तेन संबंधेन यो हेतुमानित्यस्य फलमाह। धूमसमवायीति प्रतियोगितायाइति अवच्छेदकत्वेपि वन्हित्वस्य
नक्षतिरित्यन्वयः साध्यस्य चेत्यादेः फलमाह। धूमसंयोगीत्यादि ननु तादात्म्येन गवादेः साध्यत्वे सास्नादावव्याप्तिस्तत्र साधनवन्निष्ठान्योन्याभावप्रतियोगितायाः सा
ध्यतावच्छेदकतादात्म्यसंबंधावच्छिन्नत्वे मानाभावस्य स्वयमेव वाच्याधिकारटिप्पण्यामुक्तत्वादेवं धनी चैत्र त्वादित्यादौ स्वत्वनियामकस्वामित्वादिसंबन्धेन धनादेः
* साध्यतायामपि तादृशसंबंधावच्छिन्नप्रतियोगिअप्रसिद्धेरत आह। यद्वेति यत्तु प्रतियोगितावच्छेदके सम्बन्धेन तद्वैयधिकरण्यप्रवेशप्युनः प्रतियोगितायाः साध्यता
वच्छेदकसम्बन्धावच्छिन्नत्वविवक्षायां गौरवमतो यद्वेत्यादिकल्प इति तत्तुच्छं संबन्धान्तरावच्छिन्नतत्तन्नन्ताभावप्रतियोगितावच्छेदकभेदकूटघटितत्वेन यद्वेत्यादि धूमवान् वह्निप्रति
कल्पस्यैव गुरुतरत्वादित्याहुः संबंधभेदेन साध्यतावच्छेदकसंबंधेन ननु संबंधविशेषणसाध्यसाधनयोः सामानाधिकरण्यप्रवेशे तादात्म्येन हेतुसाध्यभावे व्याप्तिः योगितया
तादृशसम्बन्धेन हेतुसाध्ययोरधिकरणाप्रसिद्धेरत आह। एवं स्थित इति संबंधविशेषस्यात्र निवेशे स्थिते इत्यर्थः सामानाधिकरण्यादावित्यादिपदेन हेतुसामानाधि महानसी
करण्यप्रविष्टहेत्वधिकरणस्य परिग्रहः प्रयोजनमाह तथा चेति धर्मिणो पीति तादात्म्येन व्याप्यत्वं व्यापकत्वं च निर्वहतीत्यर्थः अन्यथा तादात्म्येन हेतोः साध्यस्य चाधि यवह्निमा
करणाप्रसिद्ध्या न तन्निर्वाह इति भावः योन्योन्याभाव इति यो भाव इति वक्तुमुचितं अन्योन्याभावत्वनिवेशे वैयर्थ्यादिति ध्येयम् तदनवच्छेदकवन्हिमत्वेति वन्हिम नातादृशा
त्वं च वन्ह्यधिकरणत्वं तच्चाधिकरणव्यक्तीनां भेदेप्यभिन्नमित्याशयेनेदं अत्र साध्यसाधनयोरिवतदीयसंबंधयोरपि भेदे न व्याप्तेर्दात्तादात्म्येन हेतुसाध्यकस्थले भावना
हेतुमन्निष्ठाभावाप्रतियोगिसाध्यतादात्म्यमेव व्याप्तिर्वक्तुमुचिता लाघवादिति वदन्ति एवमिति सामानाधिकरण्यादौ सम्बन्धित्वनिवेशे कृते इत्यर्थः धर्मिण इति वस्तु त्
न इत्यर्थः तथा च गोः सास्नावत्त्वाद्वन्हिमान्धूमवत इत्यादौ तादात्म्य संबंधेन व्यापकता व्याप्यतापि संगच्छत इति भावः ननु तादात्म्येन धर्मिणो धर्मव्याप्यतायाम प्रसि राम
द्धान्त इत्यत आह। अत एवेति धर्मिणो धर्मव्याप्यत्वादेवेत्यर्थः तत्र तत्र व्यतिरेकेग्रथे इत्यादि ननु समवायेन जलादौ पृथिवीत्वाभावव्याप्यघटत्वैवत द्रव्यसंगतिरित्याशं ११

व

कयतथासतिपृथिव्यांजलादिभेदसाधनार्थंतदुपन्यासोनस्याद्व्यापकताघटकसंबन्धावच्छिन्नव्यापकाभावेनव्याप्यताघटकसंबन्धावच्छिन्नव्याप्याभावस्यैवसिद्धेरि
त्यन्वयिनिदृष्टांतपूर्वकंपरिहरति यथाचेति पक्षविशिष्टेति पक्षविषयकइत्यर्थः प्राचांमतेपक्षविशेष्यकज्ञानस्येवपक्षप्रकारकज्ञानस्यापिकारणत्वात् धूमावपर्वइ
तिनवन्हिधीरित्यन्वयः कथमिति नियमो पपद्यतइति परेणान्वयः नसंयोगावच्छिन्नाभावानुमितौभासतइतितदर्थः निवर्ततेचेति धूमइतिपूर्वेणान्वयः तादात्म्ये
नैवेतिसमवायेनव्याप्यतायांतुसमवायेनजलस्यात्यन्ताभावःसिध्येदिति जलभेदसाधनार्थंतदुपन्यासावतारोनस्यादितिभावः नन्वेतावतापितादात्म्यसंबंधावच्छिन्नजला
भावःसिद्धोनतुजलान्योन्याभावइतितद्दोषतादवस्थ्यमतआह सएवचेतिधर्मिणोधर्मव्याप्यत्वेप्राचां संवादमुपन्यस्यधर्मिणोधर्मव्यापकत्वेतमाह इत्थमेवचेति
धर्मिणोधर्मव्यापकत्वेयुक्तिमप्याह अतएवेति धर्मिणोधर्मव्यापकत्वादेव नन्वियंगौरित्यनुमितिर्गवेतरावृत्तित्वरूपायाशुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात् समवायेन
निरवच्छिन्नगोत्वसाध्यकैवभविष्यतिसाध्यवदन्यावृत्तित्वरूपायाअपिव्याप्तेरनुमितिहेतुत्वस्याग्रेवाच्यत्वात्तस्मात्तादृशानुमित्यनुरोधात् धर्मिणोधर्मव्यापकत्वस्वी
कारोनुचितइत्यतउक्तंगोत्वत्वेति गोत्वत्वंगवेतरावृत्तित्वं तथाचगवेतरावृत्तित्वरूपायागोत्वव्याप्तेर्ज्ञानदशायामुपन्यायादियंगौरित्यनुमितेर्गोत्वविधेयत्वासंभवा
द्गोविधेयत्वमेवेतितदनुरोधादवश्यंधर्मिणोव्यापकत्वंवाच्यमितिनतुगोःसाध्यत्वेपिगोत्वंहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकव्याप्तिधियोनुमि
तिहेतुत्वात्तत्रचधर्मितावच्छेदकविधयैवगोत्वत्वग्रहस्यापेक्षितत्वात् तदग्रहेगोविधेयकानुमितिरप्यनुपपन्नेत्यतआह आदाविति आदिनापक्षधर्मतापरिग्रहः।
तथाचगवेतरावृत्तित्वव्याप्तेःसास्नाव्यापकतावच्छेदकग्रहेधर्मितावच्छेदकतयो पस्थितिध्रौव्येपितद्विशिष्टस्ययत्रनपक्षधर्मताधीस्तत्रैवायंगौरित्यनुमितेर्गोविधे
यत्वमावश्यकमितितदनुरोधेनैवतादात्म्येनैवव्यापकत्वंवाच्यमित्याशयः यत्तुशुद्धगोत्वावच्छिन्नानुमितिंप्रति गोत्वनिष्ठनिरवच्छिन्नविशेष्यताकमेवप्रतियोगिता
नवच्छेदकत्वज्ञानंहेतुरतोगोत्वत्वाग्रहेगोत्वेसास्नादिव्यापकतावच्छेदकत्वग्रहसंभवान्नोसाध्यकानुमितेनानुपपत्तिरभावलौकिकप्रत्यक्षएवाधिकरणतावच्छेदकरू
पेणतदुपस्थितेर्हेतुत्वादिति तन्तुच्छं व्यभिचारज्ञानाऽप्रतिबध्यतयातादृशव्यापकताग्रहस्यानुमित्यहेतुत्वादन्यथातुल्ययुक्त्याशुद्धगोत्वविधेयकानुमितिंप्रतिनिर
वच्छिन्नगोत्वविशेष्यताकस्यप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावाप्रतियोगित्वज्ञानस्यहेतुत्वादयंगौरित्यनुमितेर्गोत्वत्वाद्यनु प स्थितावपिगोत्वरूपधर्मेसा
ध्यकत्वस्यदुर्वारत्वापत्तेरितिदिक् प्राचांस्तुगोतादात्म्यस्यसास्नाव्यापकत्वग्रहादेवगोस्तादात्म्येनसिद्धिसंभवान्नतदनुरोधेनगोस्तादात्म्येनव्यापकत्वस्वीकारो
युक्तःसंबंधगतव्यापकत्वग्रहादेवसम्बन्धिनोनुमितेर्मिश्रादिसंमतत्वात् अतउक्तंगोत्वत्वाग्रहदशायामिति गोतादात्म्यत्वाद्यग्रहदशायामितितदर्थइत्याहुः तच्चिं

धर्म्म

जा॰सि॰ त्यं गोत्वत्वाद्यग्रहदशायामित्यस्य गोत्वत्वेनाग्रहो यस्मादिति व्युत्पत्त्या गोत्ववाधनिश्चयदशायामित्यर्थः तथा च तदानीमयं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं
१२ स्वीकार्यमित्यपि वदन्ति गौरिति सिद्ध्यतीति परेणान्वयः गोव्यतिरेकादिति तादात्म्येनेत्यनुषज्यते एवं चेति सामानाधिकरण्यादौ संबन्धित्वप्रवेशे चेत्यर्थः संयोगत्वेन सं
योगमात्रस्य प्रतियोगितावच्छेदकत्वे वृत्त्यनियामकसंयोगस्यापि तत्त्वं सर्वसिद्धमतो मात्रपदं सम्बन्धस्तत्वेइति अन्यथा तादृशप्रतियोगिताकाभावाप्रसिद्ध्या गग-
नादेः पृथिवीत्वव्यापकत्वं दुर्घटमेव स्यादिति भावः तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेपि द्वितीयकल्पानुसारेण व्यापकत्वं संपादयति साध्यतावच्छेदकसं
बंधेनेति। तथा च संबंधान्तरावच्छिन्नघटाद्यभावमादायैव लक्षणसमन्वय इति भावः द्रव्यत्वस्य गगनासंयुक्तविभ्वंतरे तद्व्यभिचारात् हेत्वन्तरमाह। पृथिवीत्वादि
ति व्यापकत्वमिति गगनादेरिति पूर्वेणान्वयः। ननूत्पत्तिकाले जन्यस्य प्रलयकाले नित्यस्य पृथिवीमात्रस्य गगनाभाववत्वात् कथं तस्य पृथिवीत्वव्यापकत्वमत आह त
दभाववतोपि गगनादेरभाववतोपि संयोगेनेति वृत्त्यनियामकसंयोगेन तत्संबंधित्वाद्गगनादिसंबन्धित्वात्। नन्वेवं निरुक्तव्याप्तिज्ञानात् घटो गगनवानित्यनुमितिः
प्रमा स्यादत आह सिद्धिरपीति तथैव वृत्त्यनियामकसंयोगेनैव तथा च तादृशसंबंधेन गगनानुमितेः प्रमात्वमिष्टमेवेति भावः तेनासंबंधित्वादिति येन संबंधेन साध्य
सामानाधिकरण्यं परामर्शे भासते तेनैव सम्बंधेन साध्यानुमितेः फलत्वादिति भावः सामानाधिकरण्यधियो हेतुत्वस्य तद्देशे संबंधविशेषनिवेशस्य वानंगीकारमते व्या
ह अव्यापकत्वाच्चेति। तेनेत्यनुषज्यते तथा च यादृशसम्बन्धेन साध्यस्य हेतुव्यापकत्वं गृह्यते तेनैव सम्बन्धेन साध्यसिद्धिः फलमतो वृत्तिनियामकसम्बन्धेन साध्यस्य ०दृ१० पं१॥
हेतुव्यापकत्वासंभवादेव न तेन साध्यस्य प्रमानुमितिरिति भावः ननु वृत्तिनियामकसंयोगेनापि गगनस्य पृथिवीत्वादिव्यापकत्वं दुर्वारं तादृशसम्बन्धेन गगनसम्बन्ध्य
प्रसिद्ध्या गगनाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् तादृशाभावान्तरप्रतियोगित्वस्य च गगनादावसत्वादत आह व्यक्तीत्यादि इदं वृत्तिनियामकसंबंधेन गगनादेर
व्यापकत्वं तथा च निरुक्तप्रतियोगिकत्वेत्यादिना वक्ष्यमाणप्रतियोग्यसामानाधिकरण्यं वृत्तिनियामकसम्बन्धेन गगनाभावेपि स्यास्यतीति भावः कालिकसम्बन्धे
न गोत्वादौ साध्ये घटादिकालोपाधिमात्रवृत्तिघटत्वादिहेतौ नाव्याप्तिः भिन्नकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावस्यैव घटादौ प्रतियोगिव्यधिकरणस्य संभवात् तदुक्तम
ष्टद्रव्यातिरिक्तेति पृथिव्यादिचतुर्द्रव्यातिरिक्तेति तु न्यायः गगनादेः कालत्वविरहादेव तद्व्यादास इति ध्येयं कर्मात्मकखंडकालस्यापि भिन्नकालीनतद्व्यक्तित्वावच्छि
न्नाभावप्रतियोग्यनधिकरणत्वप्रसिद्ध्या तन्मात्रवृत्तिस्पंदत्वादिहेतौ नाव्याप्तिरतश्चरमद्रव्यपदं तथाविधकालत्वादावव्युक्तदिशा नाव्याप्तिरतो मात्रपदं (समवायेन सं राम
म्बन्धेन हेतुतालाभाय धर्मपदं अन्यथा कालिकेन महाकालत्वाद्यधिकरणघटादौ प्रतियोगिव्यधिकरणातीततत्तद्व्यक्तित्वावच्छिन्नाभावप्रसिद्ध्या नाव्याप्तिरिति ध्येयम्)॥ १२

१स्वरूपे

तादृशधर्मस्यमहाकालत्वादेःसमवायादिनाव्यापकत्वंसंयोगाद्यव्याप्यवृत्तेःस्फघटमित्यतउक्तं विशेषणेनेति कालिकविशेषणतेत्यर्थः व्याप्यवृत्तिप्रमेयत्वादेः प्रतियोगिवैयधि
करण्याघटितमेवकालिकसम्बन्धावच्छिन्नव्यापकत्वंसंभवतीत्यतउक्तं अव्याप्यवृत्तीति तादृशंसाध्यंघटादिकंद्रव्यत्वादिकंचतद्धेतोपिकालस्यतदनधिकरणदेशत्वाव
च्छेदेनकालिकसंबंधावच्छिन्नतदभाववत्वात् नह्येवंविधोवाच्यत्वादिस्तदनधिकरणदेशाप्रसिद्ध्यातदवच्छेदेनकालिकसंबंधावच्छिन्नवाच्यत्वाभावस्यकालेऽसंभ
वादितिभावः नस्यादितिति तथाचकालोघटवान्महाकालत्वादित्यादौव्याप्तिलक्षणाव्याप्तिरितिभावः प्रथमविवक्षानुसारेणदोषंसंगमयति स्वावच्छेदकेति प्रतियोगिताव
त्व च्छेदकसंबन्धेनेत्यर्थः कालेमहाकालेतत्संबन्धावच्छिन्नस्यसाध्यतावच्छेदकीभूतकालिकसंबन्धावच्छिन्नत्वस्यासंभवइतिपरेणान्वयः द्वितीयविवक्षानुसारेणाद्धतेन ५८४
० संबन्धेनेति साध्यतावच्छेदकीभूतकालिकसंबन्धेनेत्यर्थः ननुमहाकालान्यत्वविशिष्टघटाभावएवप्रतियोगिव्यधिकरणःसुलभः नचात्रविशेषणविशेषशब्देनमहाकाल ता
य्यधिक निरूपितविशेषणतायाएवविवक्षितत्वात्तादृशसंबन्धेननिरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्धेर्वोक्ताभावस्यापिप्रतियोगिवैयधिकरण्यासंभवइतिवाच्यं तथासतिकालवृ ०पृ१०
रणा त्तिधर्मस्यतादृशविशेषणतयाकिमपिव्यापकं नस्यादित्यस्यैवसम्यक्त्वे ऽष्टद्रव्यातिरिक्तत्वमिधानस्यसंदर्भविरोधापत्तेः स्वरूपसंबन्धेनगगनादेर्वृत्तिमत्वेतुद्रव्यग्निमविरो पं११॥
धाच्चमहाकालीयविशेषणतयागगनादेर्वृत्तिमत्वेपितादृशसंबन्धसामान्येमहाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात् तादृशघटत्वावच्छिन्नाभा ५८०
वस्यैवनिरुक्तक्रमेणप्रतियोगिव्यधिकरणत्वसंभवेनपूर्वमतस्यैवसम्यक्त्वादितिचिन्त्यतदानींमहाकालान्यत्वविशिष्टो घटःकालोयंमहाकालान्यत्वविशिष्टघटवानित्या
दिप्रतीत्यामहाकालस्यापितत्तत्कालोपाध्यवच्छेदेनमहाकालान्यत्वविशिष्टघटवत्वात् अन्यथोक्तप्रतीत्याखंडकालएवविशिष्टघटवत्वावगाहनेवस्तुमात्रस्यैवमहा
कालेऽसत्वप्रसंगात् इदानींतदानीमित्यादिप्रतीतिव्यतिरेकेणमहाकालविषयिण्याः प्रतीतेःस्वरसतःकुत्राप्यसत्वात् नचैवंखंडकालस्याधिकरणत्वेमानाभावःपटध्वंस
विशिष्टकालःपटवदन्यइत्यादिप्रतीतेः प्रमात्वानुरोधेनैवखंडकालस्यापितथात्वादितिसिद्धांतानुसारिपंथाः परेतुमहानसीयवह्नित्वेनवह्निघटोभयत्वेनवाऽवच्छि
न्नप्रतियोगिताकस्यधूमसमानाधिकरणाभावस्यप्रतियोगितावच्छेदकत्वंवह्नित्वेप्यस्तीत्यव्याप्तिभियाऽवश्यंसाध्यतावच्छेदकताघटकोयःसाध्यवृत्तिर्धर्मःतदनव
च्छिन्नैवहेतुसमानाधिकरणाभावप्रतियोगितालक्षणप्रवेशनीयाप्रत्येकमुभयत्रपर्याप्तिसम्बन्धेनासतोधर्मस्यतादृशसम्बन्धेनोभयवृत्तित्वासंभवेनहेतुमन्निष्ठाभावप्र
तियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वनिवेशायोगात् एवंचप्रकृतेमहाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्यप्रतियोगितायाःसाध्यतावच्छेदकता
घटकेनमहाकालान्यत्ववैशिष्ट्यरूपधर्मेणावच्छिन्नत्वात्तादृशप्रतियोगिताकाभावमादायनप्रतियोगिव्यधिकरणाभावस्यप्रसिद्धिसंभवनापीतिप्राहुः तच्चिन्त्यं।
सा

जा·सि प्रमेयवान्वाच्यत्वादित्यादौ हेतुसमानाधिकरणतादृशप्रतियोगिताकाभावाप्रसिद्ध्या अव्याप्तिप्रसंगात् वस्तुतो यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणत्वं हेतु रु·
१३ मतेतत्रावच्छेदकवैशिष्ट्यमवश्यं साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यं अन्यथा तन्मात्रः पिंडस्यापि कालिकसंबंधेन यद्धूमत्वविशिष्टवन्ह्यादिकसंयोगसंबन्धे
न तदधिकरणतया धूमवान्वन्हेरित्यादावतिव्याप्त्यापत्तेः एवंच यत्र समवायेन घटत्वविशिष्टस्य कालिकसंबंधेन साध्यता तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्ना
भावस्य साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धं स्वरूपसमवायाभ्यामेव तत्र तथात्वात् विशिष्टनिरूपितसमवायस्य वान
भ्युपगमात् तस्तादृशाभावमादाय न प्रसिद्धिसंभवइतिध्येयं केचित्तु साध्यभेदेन व्याप्तिभेदाद्विशिष्टसाध्यकस्थले एव यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकर
णत्वं हेतुमत इति वक्तव्यं अविशिष्टसाध्यकस्थले तु प्रतियोगिताश्रयानधिकरणत्वं हेतुमत इत्येव लाघवात् वक्तव्यं तथा च शुद्धघटस्य साध्यतायां महाकालान्य
त्वविशिष्टघटाभावोपि प्रतियोगिसमानाधिकरण एव प्रतियोगिता च प्रतियोगितावच्छेदकस्वरूपा लाघवात् न तु प्रतियोगिस्वरूपा तेषां नानात्वेन गौरवात् तेनैकप्रति
योग्यनधिकरणतामादाय संयोगित्वादित्यादावव्याप्तिरित्याहुः तच्चिंत्यं कालो घटवान्महाकालत्वादित्यादावव्याप्तिवारणार्थमेवमविशिष्टसाध्यकस्थलेपि प्रतियो
गितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशस्य प्रामाणिकतया गौरवस्याकिंचित्करत्वादिति सार्वभौममतमाशंक्य निराचष्टे नचेति वाच्यमिति परेणान्वयः तादृ
शसंबंधेनेति साध्यतावच्छेदकसम्बन्धेनेत्यर्थः इदं चावृत्तीत्यस्य प्रतियोगिन्यावृत्त्यान्वितं तादृशपदस्य प्रतियोगितावच्छेदकसम्बन्ध परत्वे पुनरग्रे प्रतियोगिता
साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या तादृशसंबंधेनेत्यस्य फलमाह सत्त्वादीति विषयतावृत्त्यनियामकत्वमते सत्त्ववति घटादौ ज्ञानाभावस्य सहजत एवप्र
तियोगिवैयधिकरण्यं संभवतीत्यतः संयोगसामान्यस्येति नातिप्रसंग इति ज्ञानवान् संयोगवान्वा सत्त्वादित्यादौ नातिप्रसंग इत्यर्थः सत्तावद्वृत्तित्वसामान्याभाव
स्य संयोगाद्यभावाद्युक्तातिव्याप्तिवारणमेव यत्किंचित्पदस्यापि प्रयोजनमित्यवधेयं प्रतियोगितावच्छेदकविशिष्टेत्यस्य फलमाह भूतत्वस्यादित्स्वयं मनसः स्व
इनात् भूतत्वमूर्त्तत्वोभयसाध्यकमूर्त्तत्वस्य सद्धेतुतामाशंक्याह गुणकर्मान्यत्वेत्यादि विशिष्टात द्वयं मनोगुणयोः क्रमेणान्वितं इदं च विशिष्टस्यानतिरिक्तत्वे विशिष्टधर्मावच्छि
च्छिन्नाधेयत्वस्यानतिरिक्तत्वमित्यभ्युपेत्य अन्यथा सार्वभौममते उभयत्वस्यैकविशिष्टापरत्वे भूतत्वमूर्त्तत्वोभयगुणकर्मान्यत्वसत्त्वयोरतिरिक्ततया तयोः सहजत एव
मनोगुणाद्यवृत्तितया प्रतियोगितावच्छेदकविशिष्टेत्यभिधानस्यासंगतिरितिध्येयं सामान्यपदस्य फलमाह संयोगसामान्यत्विति तथा च संयोगी द्रव्यत्वादित्यादावव्या राम
प्तिवारणार्थमेव सामान्य पदमिति भावः विशिष्टस्येति विशिष्टनिरूपिताधेयत्वस्येत्यर्थः। तथा च विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरिति भावः। ननु तादृशसं १३

दे० ३० पृ११ पं२॥ ॥ संबंधन्नाजाय प्रतियोगिपदं। तेन धूमवान्वन्हेर्नातिप्रसंगः॥

णहेत्वधिकरणवृत्त्यभावप्रतियोगिप्रतियोगिकत्वोभयसंबंधेन)

बन्धावच्छिन्नयत्किंचिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकप्रतियोगितावच्छेदककत्वं सामान्यकांतेनविवक्षितमतोनोक्तदोषइत्यतआह समवाये
नेति। ननुसमवायेनजातेर्व्याप्यवृत्तित्वात्तत्साध्यकेप्रतियोगिवैयधिकरण्यमेवनदेयं देयंचाव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौसाध्यतावच्छेदके व्याप्यवृत्तिता
नवच्छेदकविशेषणमतोनतत्रतल्लक्षणस्यातिव्याप्तिरतआह संयोगादीति गुणकर्मान्यत्वेति एकैकोपादानेतत्रप्रतियोगिवैयधिकरण्यप्रसिद्धमतउभयोपादानं अद्रव्ये
गुणादौसमवायेनवृत्तेः प्रसिद्धेः तआह। हेतुमतीति अत्रविशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वोपगमेस्वप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसंबंधाव
च्छिन्नत्वोभयाभाववद्धेत्वधिकरणयत्किंचिद्व्यक्तिवृत्तित्वसामान्यकत्वस्यविवक्षिणान्नोक्तदोषइत्यस्मद्गुरुचरणाः नव्यास्तुसाध्यतावच्छेदकसम्बन्धेनप्रतियोग्यधि
करणयावद्धेत्वधिकरणकोयोयस्तदन्यत्वंप्रतियोगिवैयधिकरण्यंवाच्यमतोगगनाभावमादायैवप्रसिद्धेर्नकोपिदोषः नचैवंयद्यत्संबंधेनयद्धर्मावच्छिन्नानधिकरणहे
त्वधिकरणंतत्तत्संबन्धान्यसाध्यतावच्छेदकसम्बन्धेनतद्धर्मावच्छिन्नसामानाधिकरण्यमेवलाघवाद्व्याप्तिरस्तु तथाचघटवान्महाकलत्वादित्यादौसमवायेनघटाद्यभा
वोपिप्रतियोगिव्यधिकरणःसंभवतीतिवाच्यं घटवृत्तित्वविशिष्टद्रव्यत्ववान् ४ घटत्वादित्यादावव्याप्तेः केनापिसम्बन्धेनहेतुमतःसाध्यतावच्छेदकावच्छिन्नान
धिकरणत्वासंभवात् तादात्म्येनतथाविधानधिकरणत्वसंभवेपिदधित्वविशिष्टप्रमेयवान् (अंत्यावयविभिन्न)स्थूलदधित्वादित्यादावव्याप्तिरितिप्राहुः तादृशसंबंधसामा ५८
न्यइत्यस्यपूर्ववदर्थोबोध्यः कुत्रचित्साध्यतावच्छेदकसंबंधसामान्यइत्येवपाठः विवक्षितत्वादिति अभावांतर्भूतग्रंथेनेत्यादि तथाचसाध्यतावच्छेदकसंबंधसामा॰
न्येयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तादृशप्रतियोगितानवच्छेदकीभूतसाध्यताव
च्छेदकावच्छिन्नसामानाधिकरण्यंव्याप्तिरित्यर्थः संबंधसामान्येइत्युक्तौकालिकसंबंधेधूमप्रतियोगिकत्वायःपिंडानुयोगिकत्वोभयसत्वाद्धूमवान्वह्नेरित्यादावति॰
व्याप्तिरतः साध्यतावच्छेदकेति समवायिनःसंयोगेनसाध्यतायांजातिमत्वादावति व्याप्तिः साध्यतावच्छेदकीभूतसमवायात्मकधर्मेसमवायित्वावच्छिन्नप्रतियो
गिकत्वहेत्वधिकरणगुणाद्यनुयोगिकत्वोभयसत्वेनसाध्याभावस्यलक्षणाघटकत्वादतः सम्बन्धपदं यद्धर्मावच्छिन्नसंसर्गताकप्रकृतसाध्यकानुमितिः फलंतद्धर्मा
वच्छिन्नेसम्बंधसामान्यइतितुफलितार्थः घटीयसंयोगेपर्वतीयसंयोगेवाहेतुमन्महानसानुयोगिकत्ववन्हित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्वाद्वन्हिमान्
धूमादित्यादावव्याप्तिरतःप्रथमसामान्यपदं तथाचमहानसीयवन्हिसंयोगएवतादृशोभयाभावविरहान्नाव्याप्तिः संयोगसामान्यएवहेतुमद्योगोलकानुयोगिक
त्वधूमत्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्वाद्धूमवान्वन्हेरित्यादौनातिव्याप्तिः संयोगसामान्यएवसमवायनिष्ठपर्वतानुयोगिकत्वस्यवन्हित्वावच्छिन्नप्रतियो॰

४ समवायसंबंधेनदधित्वाधिकरणनिरूपितसमवायसंबंधावच्छिन्नवृ ४ समवायसंबंधेनदधित्वाधिकरण॰ निरूपितसमवायसंबंधावच्छिन्नवृत्तित
त्तित्वसंबंधेनदधित्वविशिष्टप्रमेयस्यसाध्यतायां ... प्रमेयस्य ... संबंधेनसाध्यतायां

*कालांतरीय *प्रतियोगिकत्वस्य तद्घटकत्वयोजनं *तदधिकरणत्वमपि स्वरूपसंबंधेन

जा॰सि॰ १४

गिकत्वस्य च हृद्योरभावसत्त्वात्तथैवाव्याप्तिरतः सामान्योभयेति सामान्यपदमुभयत्रान्वितमिति भावः तादृशोभयाभावश्च स्वरूपसम्बन्धेन बोध्यम् तेन समवायादिना
तदुभयाभावस्य सम्बन्धमात्रे सत्त्वेऽपि सद्धेतौ नाव्याप्तिरेतद्घटवान् एतद्घटत्वादित्यादौ एतद्घटत्वावच्छिन्नप्रतियोगिकत्वविशिष्टतद्घटानुयोगिकत्वाप्रसिद्धेरभावांतरमादा
याऽतिव्याप्तिः गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाप्रसिद्ध्या गगनाभावमादाय प्रकृताव्याप्तिवारणासंभवश्च स्यादतो निरुक्तप्रतियोगिकत्वविशिष्टयत्किं
चिद्धेत्वधिकरणानुयोगिकत्वसामान्याभावं परित्यज्य तदुभयसामान्याभाव उक्तः नच यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविशिष्टसंबंधसामान्ये हे
त्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वविशिष्टसाध्यतावच्छेदकसंबंधत्वस्य तथाविधसंबंधसामान्ये वा यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं
स्य व्यतिरेकः तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकस्य कथं नोक्तमिति वाच्यं द्रव्यवान्प्रमेयत्वादित्यादौ संयोगेन साध्यतायामतिव्याप्त्यापत्तेः प्रमेया
नुयोगिकसंयोगसामान्यस्यैव द्रव्यत्वावच्छिन्नप्रतियोगिकत्वेन साध्याभावस्य लक्षणाघटकत्वादिति ध्येयं एवं च कालिकसंबंधसामान्ये महाकालानुयोगिकत्वसत्त्वे
ऽपि गगनप्रतियोगिकत्वविरहाद्गगनाभाव एव घटवान्महाकालत्वादित्यादौ प्रतियोगिव्यधिकरणतया प्रसिद्ध इति भावः ननु हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वं
यदि तद्वृत्तित्वं तदा धूमवान्वन्हेरित्यादावतिव्याप्तिः धूमप्रतियोगिकस्यापि संयोगस्य कालिकसंबंधेनायोगोलकवृत्तित्वात् यदि च साध्यतावच्छेदकसंबंधस्य संसर्गे
तानियामको यः संबन्धस्तेन हेत्वधिकरणवृत्तित्वमेव तदनुयोगिकत्वं वाच्यं तदा संयोगेन द्रव्यस्य साध्यतायां द्रव्यजात्यन्यतरत्वादावतिव्याप्तिः जातौ समवायेन तस्य प्रसिद्धेः
नच साध्यतावच्छेदकसंबंधावच्छिन्नाधिकरणतासामान्ये निरुक्तोभयाभाववत्त्वं विवक्षितं तत्र च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वाच्यमिति सांप्रतं अत एवेत्यादिव
क्ष्यमाणग्रंथासंगतिप्रसंगात् समवायस्यैकत्वेऽपि तदवच्छिन्नाधिकरणतायां निरुक्तोभयाभावसत्त्वेन द्रव्यजातेरित्यादावतिव्याप्त्यभावादिति चेन्न संयोगः पर्वते वन्हेः सं
बंधो न तु वन्हौ पर्वतस्येत्यादिप्रतीत्या हि किंचित्प्रतियोगिककिंचिदनुयोगिकसम्बन्धत्वमनुभवसिद्धं कुत्रचिदेव संयोगादौ न तु सर्वत्र तच्च स्वरूपसंबंधविशेषोऽतिरिक्तो वे
त्यन्यदेतत् तथा च साध्यतावच्छेदकसंबंधसामान्ये निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य विवक्ष
णाद्धूमसंयोगस्यायोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्रसंगः। तत्र यथार्थविशिष्टधीनियामकस्यैव तदनुयोगिकसम्बन्धत्वात् एतेन वन्हिमान्वन्हिरूपादित्या
दावतिव्याप्तिः पर्वतवन्हिसंयोग एव वन्हिप्रतियोगिकत्वहेत्वधिकरणीभूतवन्ह्यनुयोगिकत्वोभयाभावविरहेण वन्हिसामान्याभावस्य लक्षणाघटकत्वादित्यपास्तम् पर्व
तवन्हिसंयोगस्य हेतुमद्वन्हिवृत्तित्वेऽपि वन्ह्यनुयोगिकसंबंधत्वविरहेण तत्र तादृशोभयाभावसत्त्वात् इदं त्ववधेयं यत्रैकसंयोगव्यक्त्या यत्पदार्थयोः परस्परं विशिष्टधीः

तस्य विरुद्धत्वादेव अतिव्याप्तिवारणात् दोषांतरं

*धूमप्रतियोगिकसंयोगेन साध्यतायां एवं प्रमेये ऽपि

लं॰ *किंतु तादात्म्यसंबंधे प्रसिद्धिः

राम॰ १४

प्रमात्तत्र तयोरेकस्मिन्संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यपि व्याप्तिः तदुभयसंयोगस्य निरूक्तोभयाभावविरहादिति यत्किंचिदित्यस्य फलमाह धूमसंयोगइति
अन्यथा वन्ह्यधिकरणमहानसानुयोगिकत्वधूमप्रतियोगिकत्वोभयस्यैव धूमसंयोगे सत्वेन धूमाभावस्य प्रतियोगिवैयधिकरण्याभावाद्धूमवान्वन्हेरित्यादावतिप्रसंग
स्यादितिभावः। ष ष्ठ्यंतत्रयं विरहादित्यन्वयि निरुक्तपदस्य छ्वन्नतः फलमाह चैत्रान्यत्वेति। निरुक्तपदानुक्तौ चैत्रान्यत्वविशिष्टैतद्दंडवानेतद्दंडादित्यत्र चैत्रवृत्त्येतद्दंडसंयोगेऽ
व चैत्रान्यत्वविशिष्टैतद्दंडाभावप्रतियोगीप्रतियोगिकत्वहेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयाभावविरहात्तादृशदंडाभावस्य लक्षणाघटकतयातिव्याप्तिः स्यात् तदुपाद
नेतु चैत्रान्यत्वविशिष्टैतद्दंडत्वावच्छिन्नप्रतियोगिकत्वस्याभावादेव तत्रोभयाभावसंभवइतिनातिव्याप्तिरितिभावः यदिच प्रतियोगिताप्रत्याश्रयंनानैवनत्वेकेतिमतं त
दा चैत्रान्यत्वविशिष्टदंडत्वावच्छिन्नं यच्चैत्रावृत्तिदंडनिष्ठं प्रतियोगित्वं तदाश्रयप्रतियोगिकत्वहेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयाभावस्य संयोगसामान्याएवस
त्वान्निरुक्तपदं विनापि नातिव्याप्तिः संभवतीति तन्मतसाधारण्येनातिव्याप्तिरक्षणार्थमुक्तमेतदिति यद्यनुयोगिताप्रत्याश्रयंनानैवनत्वेकेतिमतं तदा दंडसामान्यस्य हे
तुत्वे एतद्दंडप्रतियोगिकसंयोगसामान्यएव दंडान्तराधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वाभावादेवोभयाभावसत्त्वादितिव्याप्तिविरहः स्यादतो हेतावेतदितिसंयो
गेन साध्यतायां निरुक्तपदव्यावृत्तिमुक्त्वा समवायेन साध्यतायां तामाह गुणकर्मान्यत्वेति इदंच समवायस्य नानात्वमभिप्रेत्य तस्यैकत्वेतु नेत्रगुणानुयोगिकत्वविशिष्ट
यद्य सत्ताप्रतियोगिकत्वोभयसत्त्वेनातिव्याप्तितादवस्थ्यात् यद्यपि यादृशप्रतियोगितावच्छेदकावच्छिन्नस्याद्युक्तौ वन्हिधूमोभय वान्धूमादित्यत्राव्याप्तिः संयोगसा
मान्यएव वन्हिधूमोभयत्वावच्छिन्नप्रतियोगिकत्वधूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्त्वात् नच निरुक्तप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमायां संसर्गी
कविषयत्वमेव निरुक्तप्रतियोगिप्रतिकत्वं वक्तव्यं तच्च पर्वते वन्हिधूमयोः प्रत्येकसंयोगस्याप्यस्तीति नाव्याप्तिः अन्यथा संयोगेन पर्वतः वन्हिधूमोभयवानित्यादिप्रमा
याद्दुर्घटत्वापत्तेरिति वाच्यं तथासत्यत एवेत्यादिना वक्ष्यमाणाया वन्हिधूमोभयवान्वन्हेरित्यत्रातिव्याप्तेरसंगत्यापत्तेः वन्हिधूमोभयवत्ताप्रमानियामकसंयोगमा
त्रस्यैव हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वाभावेन वन्हिधूमोभयत्वावच्छिन्नाभावमादायैवातिव्याप्त्यसंभवात् तथापि साध्यसाधनभेदेन व्याप्तेर्भेदाद्व्यास नू ४
ज्यवृत्तिधर्मेण साध्यतायां निरुक्तपदमपहाय यादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितस्यैव प्रवेशान्नोक्तस्थले व्याप्तिः नचैवमुभयत्वेन साध्यतायां व्यभिचारि
ण्यतिव्याप्तिस्तद्दोषस्यात एवेत्यादिना वन्हिः धूमोभयवान्वन्हेरित्यादौ ग्रंथकृतैवाग्रे वक्ष्यमाणत्वादिति ^ वस्तुतः सम्बन्धस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमे
नवन्हिधूमोभयत्वावच्छिन्नप्रतियोगिकसंबंधत्वाप्रसिद्ध्यैव तदुभयत्वावच्छिन्नाभावस्य लक्षणाघटकत्वान्नाव्याप्तिः अतएवाग्रे वन्हिधूमोभयवान्वन्हेरित्यादाव

^ लक्षणस्यानुगतत्वपक्षेआह

१२ ० ०साध्यतानिरूपितसंबंधानवच्छिन्नावच्छेदकताश्रयनिष्ठसंबंधानवच्छिन्नावच्छेदकतानिरूपकत्वासाध्यतानिरूपितसंबंधाव
वच्छिन्नावच्छेदकता वच्छिन्नावच्छेदकताश्रयनिष्ठसंबंधावच्छिन्नावच्छेदकतानिरूपकत्वाभावः

जा॰सि॰ तिव्याप्तिर्दास्यते नचवन्हिधूमोभयत्वावच्छिन्नप्रकारित्वादावेवताहृशोभयत्वावच्छिन्नप्रतियोगिकसंबन्धत्वप्रसिद्धिसंभवः प्राचांमतेप्रकारित्वादौसंबंधत्वाभावात्। ल॰
१५ विशिष्टधीनियामकस्यैवतथात्वादितिध्येयम् नचैवमपिघटवान्नित्यज्ञानत्वादित्यत्राव्याप्तिः विषयितासंबंधेगगनीयत्वनित्यज्ञानानुयोगिकत्वोभयवत्वेनगगनत्वेनग
गनाभावमादायाप्रप्रसिद्ध्यसंभवादिति वाच्यम् ताहृशसंबंधेनघटादेर्व्याप्यवृत्तितयातत्साध्यकेप्रतियोगिवैयधिकरण्यस्याप्रवेशादित्याशयादितिध्येयं अत्रब्रूमः
साध्यतावच्छेदकसंबन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपितस्वरूपसंबन्धेनयद्भावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्वंहेतुमते
पि+ ३ स्तद्भावप्रतियोगितानवच्छेदकत्वस्यसाध्यतावच्छेदकेविवक्षणेनैवसामंजस्येति निरुक्तप्रतियोगिकत्वेत्यादिखंडशःप्रसिद्धिर्विफला कालोघटवान्महाकालत्वादि
२ त्यादौकालिकसंबधावच्छिन्नघटाधिकरणतानिरूपितस्वरूपयत्संबंधेनपटत्वावच्छिन्नाधिकरणत्वसामान्यभावस्यैवहेतुमतिसत्वेनपटत्वावच्छिन्नाभावस्यैवनि
रुक्तप्रतियोगिव्यधिकरणस्यसत्त्वभत्वादितिध्येयम् एवंयाहृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धसामान्येसाध्यतावच्छेदकसंबंधत्वहेत्वधिकरणी
भूतयत्किंचिद्व्यक्त्यनुयोगिकसंबंधत्वोभयाभावस्ताहृशप्रतियोगिताकयंनोक्तेतिचिंतनीयं कालस्यजगदाधारत्वप्रवादमनुसृत्याह स्वरूपसंबन्धेनेतिकालिकविशेषतये
त्यर्थः गगनादेरवृत्तित्वप्रवादस्तुसंयोगसमवायपरः तथाचोक्तप्रणाल्यापिगगनाभावोनप्रतियोगिव्यधिकरणइतिघटवान्महाकालत्वादित्यादावव्याप्तिस्तदवस्थेति
भावः निरुक्तेतिप्रतियोगितावच्छेदकसंबधेनयाहृशप्रतियोगितावच्छेदकावच्छिन्नासंबंधित्वंहेतुमतस्ताहृशप्रतियोगितासामान्यइत्यर्थः तथाचसंयोगादिनाघटाद्य
भावमादायैवघटवान्महाकालत्वादित्यत्रसंगतिः घटाभावप्रतियोगितायांधूमत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभयाभावसत्वेनधूमादेर्वन्ह्यादिव्यापकत्वावारणा
यसामान्येति तथाचधूमनिष्ठताहृशप्रतियोगितायामेवतदुभयसत्वाद्दोषः यत्संबंधेति समवायिनः संयोगेनसाध्यतायांघटत्वादिहेतावव्याप्तिः साधनवन्निष्ठस्यसम
वायेनसंयोगिसामान्याभावस्यप्रतियोगितायांसंयोगसमवायोभयावच्छेद्यतासत्वादतोधर्मसंबंधयोरुपादानं तथाचतदभावप्रतियोगितायांधर्मविधयासमवायेनसं
बन्धविधयासंयोगेनवावच्छेद्यत्वाभावान्नाव्याप्तिरितिभावः अत्रचद्विविधाहृशसंबन्धावच्छिन्नेत्यपिद्रष्टव्यं शब्देकस्यानुपादेयत्वात्तेनधूमवतितत्तत्संयोगसं २
बन्धेनवन्हिसामान्याभावेसत्वेपिनाव्याप्तिः तत्तत्संयोगाद्यवच्छिन्नप्रतियोगितायाःसंयोगसामान्यानवच्छिन्नत्वात् संयोगत्वसंबन्धविधयावच्छेदकतावच्छे
दकत्वेएवतत्वात् एवंयद्धर्मावच्छिन्नेत्यत्रापिद्विविधाहृशधर्मावच्छिन्नेनिबोध्यं तेनदंडिमान्दण्डिसंयोगादित्यादौताहृशप्रतियोगितायांतत्तद्दण्डावच्छेद्यत्व राम॰
संयोगावच्छेद्यत्वोभयाभावासत्वेपिनाव्याप्तिः प्रमेयत्वावच्छेद्यत्वविशिष्टस्वरूपसंबंधावच्छिन्नत्वाप्रसिद्ध्याप्रमेयवान्वाच्यत्वादित्यादावव्याप्तिरतोविशिष्टाभा १५

०साध्यता० साध्यतानिरूपि साध्यतानिरूपितसंबंधानवच्छिन्नावच्छेदकताश्रयाधिकरणा

स्व ३

वमपहायतादृशोभयाभावउक्तः नचनिरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितासामान्येयत्संबंधावच्छिन्नत्वाभावस्तत्संबन्धेनतद्धर्मा
वच्छिन्नंव्यापकमित्युक्तधर्मान्तरावच्छिन्नाभावाप्रवेशेनलाघवादितिवाच्यंघटवृत्तित्वविशिष्टद्रव्यत्ववान्घटत्वादित्यादावव्याप्तेः तादृशद्रव्यत्वभेदमादायकथ
ञ्चित्तत्रलक्षणसमन्वयेपिदधित्वविशिष्टप्रमेयवान्स्थूलदधित्वादित्यत्राव्याप्तिः केनापिसंबन्धेनहेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासंभवात् तत्रापि
दध्यन्तरानुयोगिकसमवायादिसंबन्धेनहेतुमतः प्रकृतसाध्यानधिकरणत्वेनूक्तक्रमेणापिव्यापकत्वंसुवचमितितुविभावनीयमिति तेनसम्बन्धेनेति नचैवंसंयोगे
नापिरूपस्यपृथिवीत्वव्यापकत्वापत्तिः तेनसम्बन्धेनरूपाभावप्रतियोग्यधिकरणाप्रसिद्धेरितिवाच्यं तथात्वेपितेनसम्बन्धेनरूपसामानाधिकरण्याप्रसिद्धेरव्याप्ति
लक्षणातिव्याप्तिविरहात् यद्धर्मेत्यत्रधर्मस्यसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वेनापिविशेषणीयत्वाद्वा नचवृत्यनियामकसम्ब
न्धेनसाध्यतायामव्याप्तिः तादृशसम्बन्धस्यप्रतियोगितानवच्छेदकतयातत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धेः तादृशसंबंधस्यापिप्रतियोगितावच्छेदकत्वपक्षएवैत
न्निरुक्त्यादरात् निरुक्तप्रतियोगितासामान्येयत्संबन्धातिरिक्तसंबन्धानवच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तत्संबन्धेनतद्धर्मावच्छिन्नस्यव्यापकत्वमिति
तुनयुक्तम् वृत्यनियामकसंबन्धेनसाध्यतायांव्यभिचारिण्यतिव्याप्त्यापत्तेः यद्वास्वावच्छेदकताघटकसंबन्धेनयादृशप्रतियोगितावच्छेदकानधिकरणंहेत्वधिकरणं
तादृशप्रतियोगितासामान्येयद्धर्मावच्छिन्नावच्छेदकताकत्वयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावस्तेनसम्बन्धेनतद्धर्मावच्छिन्नस्यव्यापकत्वंविवक्षितंवृत्य
नियामकसम्बन्धस्यप्रतियोगितावच्छेदकत्वाभावेपिप्रतियोगितावच्छेदकताघटकसम्बन्धत्वंसर्वसंमतमेव चैत्रोनपचतीत्यादौवृत्यनियामकानुकूलत्वसम्बन्धेनपाकवि
शिष्टायाः कृतेरभावस्यचैत्रादावन्वयदर्शनात् व्यभिचारिणितुसाध्यवत्सामान्याभावप्रतियोगितायामेवतादृशोभयाभावविरहान्नातिव्याप्तिरितितुनव्याः ननुव्याप्यवृत्ति
साध्यकस्थलेप्युक्तक्रमेणव्यापकत्वंनिर्वाच्यम् अन्यथादंडिमानित्यादौदंडित्वादिप्रकारेणव्यापकत्वानुपपत्तेः तथाचप्रमेयवान्वाच्यत्वादित्यादावव्याप्तिः प्रमेयत्वा
वच्छिन्नत्वस्याप्रसिद्धेः नचप्रकारितादौतत्प्रसिद्धिः प्रतियोगितानिष्ठायाएवावच्छेद्यतायाः प्रकृतेनिवेशनीयत्वात् अन्यथाप्रकारित्वप्रतियोगित्वसाधारणेकाव
च्छेद्यत्वविरहेणव्यभिचारिण्यतिव्याप्त्यापत्तेरतआह समवायेनेति ननुस्वरूपसम्बन्धेनगगनादेर्वृत्तिमत्वेपिप्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्येता
दृशोभयाभावविवक्षयैवसर्वसामंजस्येकृतंविवक्षान्तरेणघटवान्महाकालत्वादित्यत्रघटीयतादृशविशेषणतायांपटत्वावच्छिन्नप्रतियोगिकत्वविरहेणपटाभा
वस्यैवप्रतियोगिवैयधिकरण्यसंभवात् कालःप्रमेयवान्महाकालत्वादित्यत्रचकालिकसम्बन्धेनप्रमेयसामान्यस्यव्याप्यवृत्तितयातत्रप्रतियोगिवैयधिकरण्यस्यैवा

जा॰सि॰ नुपादेयत्वेननिर्दोषात्ततः पूर्वकल्पेदोषांतरमाह। अतएवेति। यद्यपिसंयोगमात्रस्यैववह्नित्वावच्छिन्नप्रतियोगिकत्वविरहाद्वह्निधूमोभयत्वावच्छिन्नाभावमादायैवना २०
१६ तिव्याप्तिसंभावना तथापिवह्निधूमोभयवान्वह्नेरित्यादौसंयोगस्यवह्नित्वावच्छिन्नप्रतियोगिकत्वविरहेपि समवायस्यैकत्वेनद्रव्यत्वप्रतियोगिकत्वगुणानुयोगिकत्वो
भयसत्वेनद्रव्यंजातेरित्यादौनातिव्याप्तिरितियोजनाविरहेपिचेति चकारस्तु प्रामादिकइतिप्राञ्चः वस्तुतस्तु संयोगस्यसंबन्धमात्रस्य वह्नित्वावच्छिन्नप्रतियोगिकत्वा
प्रसिद्धावपीत्यर्थः तथाचसंबन्धमात्रस्यैकप्रतियोगिकापरानुयोगिकसंबन्धत्वनियमेनवह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धस्याप्रसिद्ध्याताद्दशप्रतियोगि
कत्वस्यलक्षणाघटकत्वेपिवह्निधूमोभयवान्वह्नेरित्यादौनातिव्याप्तिः प्रकारित्वादेः सम्बन्धत्वेमानाभावादितितुप्रागेवप्रपञ्चितमस्माभिः केचित्तुवह्नेरित्यत्रधूमादि
तिनातिव्याप्तिरित्यनन्तरंचाव्याप्तिर्वेतिपाठंकल्पयंतोद्रव्यंजातेरित्यादावतिव्याप्तिंवह्निधूमोभयवान्धूमादित्यत्रचाव्याप्तिमेवपूर्वलक्षणेदोषंसंगमयंति ननुस्वरूपसं
बन्धात्मकप्रतियोगित्वस्यविशिष्टधीजनकत्वरूपसंबन्धताघटकनियमघटितत्वादात्माश्रयत्वमतआह प्रतियोगित्वादेरिति आदिनावच्छेदकत्वपरिग्रहः नसम्ब
ते न्धेनेतिप्रतियोगितात्वादिधर्मांतरप्रकारेणहेतुमन्निष्ठाभावीयत्वप्रकारेणैववात स्वप्रवेशादितिभावः संयोगत्वादिनेवेति ननुप्रतियोगितात्वमपिस्वरूपसम्बन्धएवे
क्तदोषतादवस्थ्यम् किंचवृत्यनियामकसम्बन्धेनहेतुतास्थलेतेनसम्बन्धेनहेतुसम्बन्धित्वस्यावश्यंप्रवेशएवेत्यतः सम्बन्धत्वेननिवेशेपिनक्षतिरित्याशयेनाह।
दर्शितंचेति। विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेवसंबन्धत्वमितिभावः भावभिन्नत्वरूपस्याभावत्वस्यप्रवेशेघटत्वाभाववान्द्रव्यत्वादित्यादावतिव्याप्तिरि
त्याह। अभावत्वंचेति। इदमिहेत्यादि इदंचात्यन्तान्योन्याभावत्वयोरभावत्वागर्भं तामभिप्रेत्य तयोस्तद्गर्भतायांत्वाह। तदपिवेति। अभावत्वमपिवेत्यर्थः। अपेरभावो
र्थः। अतिरिक्तविषयतापक्षस्यकेनचित्स्वीकारात् दृष्टांततात्वादीति विषयतात्वादीत्यर्थः आदिनाप्रकारित्वग्रहः। केचित्तुतत्वंतत्ताआदिनाचेदंत्वस्योपग्रहः तत्वेदं
त्वयोः पदार्थान्तरत्वंविनादुर्वचत्वात्तत्रैवपर्यवसानादित्याहुः तत्वेतिप्रतियोगितात्वाधिकरणतात्वेत्यर्थः ॥ ॥ इतिजागदीश्यन्तर्गतसिद्धान्तलक्षणंसम्पूर्णम्॥
मितिमाघशुक्ल १५ रविवासरे ॥ सम्वत् १९३० ॥ गणेशपन्तेनलिखितम्॥ ॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥ काशीसंस्कृतमुद्रायामंकिताप्रशिलाक्षरैः॥
श्रीकाशीजीमेंज्ञानवापीकेपूर्वफाटकपर श्रीविश्वनाथकेपासमहाराजशिवलालदुबेजीकेमकानमेकाशीसंस्कृतमुद्रायन्त्रमेंछपीजिनकोलेनाहोयउन्होनेइसकार्यकेसम्पा राम
दकबाबूवाराणसीप्रसादयांकेचौरीगलीमेभाईप्रतापसिंहजीकेदुकानमेमिलेगी ॥ १६

* आत्माश्रयादिभिया

॥इतिजागदीशीसिद्धांतलक्षणंसमाप्तिमपीफणत्॥